



॥ श्रीः ॥

# न्यायसिद्धान्तमुक्तावली ॥

समष्टिव्यष्टिभावभिन्नभाषापरिच्छेदद्वय-
भूषिता ॥

महामहोपाध्यायश्रीविश्वनाथपञ्चान-
नभट्टाचार्यविरचिता ॥

ध्येत्रध्यापकादिमनःसंतोषायाम्बिका-
चरणचट्टोपाध्यायमहाशयेन
श्रीकाश्यां
कीये यन्त्रालये मुद्रयित्वा प्रकाशिता ॥

क्तमहाशयप्रार्थनावशंवदेन काशीस्थरा-
जकीयप्रधानपाठालयाध्यापकेन श्री-
द्विवेदहरिनाथमनीषिणा
निरीक्षिता ॥

संवत् १९४२

शुद्धज्येष्ठशुक्ले संपूर्णा

 

॥ श्रीः ॥

## ॥ भूमिका ॥

सांप्रतमुपलभ्यमानेषु सर्वजनकमनीयानुत्तमसुखसाधनाध्यात्मिकदर्शनप्रथमभूमिकाभावमभ्युपगच्छत्सु न्यायवैशेषिकदर्शनसंपरीक्षितपदार्थसार्थपरिचायकेषु तर्कभाषातर्कप्रकाशादिबहुतरनिबन्धेषु बहुलजनावबोधक्षमान्यूनानतिरिक्तप्रामाणिकप्राञ्जलविस्तृतार्थानतिविस्तृतप्रौढलेखादिगुणशालितयाऽयमेव सिद्धान्तमुक्तावल्यभिधानो ग्रन्थस्सारासारविवेकधुरीणैर्विद्वद्वर्यैर्बहुमानपुरःसरमध्ययनाध्यापनादिव्यवहारविषयतयोपादद इति सुप्रसिद्धमेव । अत एवैष काश्यादिस्थप्रधानपाठालयसम्बन्धिपदव्यादिपरीक्षादौ प्रभुवर्यैः समादरादुपयोजितोऽपि । अत एव चैष ग्रन्थष्टीकया सहितो रहितश्चानेकधा वाराणस्यां कलिकातायां च मुद्रितोऽपि । परमेतद्ग्रन्थतात्पर्यावबोधरसिकानां यथैतद्ग्रन्थपरिशोधनसंस्करणादिकं भवेदुपकारकं न तथा टीकया

संग्रलनमात्रमित्यवधार्य विचार्य चैतद्ग्रन्थाध्ययनादावतिविस्तृतदुरूहपदार्थलेखादिशालिटीकाया अनावश्यकतामवलोक्य च निष्टीकैतत्पुस्तकसंशोधनसंस्करणादेरपरितोषकतां टीकारहितस्यैवास्य सम्यक् संस्करणादिपुरस्सरमुद्रणे श्रीमहाशयमम्बिकाचरणचट्टोपाध्ययं प्रावर्त्तयम् । प्रायते चास्य शोधनादिसाहाय्ये यथाशक्त्यहमपि । अथाप्यत्र प्रमादादिना भाविनीमस्मदादीनां च्युतिं संशोधयन्तो धीरा मां चेदनुगृह्णीयुस्तर्हि बहुलजनोपकारोद्योगसंतुष्टेन परमेश्वरेणानुगृहीतोऽहमिति संभावयेयमिति धीमतः प्रार्थयते ।

श्रीकाश्यामगस्त्यकुण्डवीथीस्थः श्रीद्विवेदरामनाथशर्म्मा ॥

## ॥ श्रीगणेशाय नमः ॥

### भाषापरिच्छेदः ।

—— ००० ——



नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।
तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥ १॥
द्रव्यं गुणस्तथा कर्म्म सामान्यं सविशेषकम् ।
समवायस्तथाभावः पदार्थाः सप्त कीर्त्तिताः ॥ २ ॥
क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः ।
द्रव्याण्यथ गुणा रूपं रसो गन्धस्ततः परम् ॥३॥
स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम् ।
संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥ ४ ॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् ।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥ ५ ॥
उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा ।
प्रसारणं च गमनं कर्म्माण्येतानि पञ्च च ॥ ६ ॥
भ्रमणं रेचनं स्पन्दनोर्द्ध्वज्वलनमेव च ।

तिर्य्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ ७ ॥

सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥

परभिन्ना तु या जातिः सैवापरतयोच्यते ।
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥

व्यापकत्वात् परापि स्याद्व्याप्यत्वादपरापि च ।
अन्त्यो नित्यद्रव्यवृत्तिर्व्विशेषः परिकीर्त्तितः ॥१०॥

घटादीनां कपालादौ द्रव्येषु गुणकर्म्मणोः ।
तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः ॥ ११ ॥

अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः ।
प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च॥१२॥

एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ।
सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥ १३ ॥

द्रव्यादयः पञ्च भावा अनेके समवायिनः ।
सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥ १४ ॥

सामान्यपरिहीनास्तु सर्व्वे जात्यादयो मताः ।
पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ १५

अन्यथासिद्धिशून्यस्य नियता पूर्व्ववर्त्तिता ।
कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्त्तितम् ॥ १६ ॥

समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥१७॥
यत्समवेतं कार्य्यं
भवति ज्ञेयं तु समवायिजनकं तत् ।
तत्रासन्नं जनकं
द्वितीयमाभ्यां परं तृतीयं स्यात्॥१८॥
येन सह पूर्व्वभावः कारणमादाय वा यस्य ।
अन्यं प्रति पूर्व्वभावे ज्ञाते यत्पूर्व्वभावविज्ञानम्॥१९॥
जनकं प्रति पूर्व्ववर्त्तिता-
मपरिज्ञाय न यस्य गृह्यते ।
अतिरिक्तमथापि यद्भवेद्
नियतावश्यकपूर्व्वभाविनः ॥ २० ॥
एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् ।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥ २१ ॥
तृतीयं तु भवेद्व्योम कुलालजनकोऽपरः ।
पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥ २२ ॥
समवायिकारणत्वं
द्रव्यस्यैवेति विज्ञेयम्
गुणकर्म्ममात्रवृत्ति

ज्ञेयमथान्यसमवायिहेतुत्वम् ॥ २३ ॥
अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ।
क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगिता ॥२४॥
क्षितिर्जलं तथा तेजः पवनो मन एव च ।
परापरत्वमूर्त्तत्वक्रियावेगाश्रया अमी ॥ २५ ॥
कालखात्मदिशां सर्व्वगतत्वं परमं महत् ।
क्षित्यादिपञ्चभूतानि चत्वारि स्पर्शवन्ति हि ॥ २६॥
द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम् ।
अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥ २७ ॥
रूपद्रवत्वप्रत्यक्षयोगि स्यात् प्रथमत्रिकम् ।
गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८॥
आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः ।
यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥ २९ ॥
स्पर्शादयोऽष्टौ वेगाख्यसंस्कारो मरुतो गुणाः ।
अष्टौ स्पर्शादयो रूपं द्रवो वेगश्च तेजसि ॥ ३० ॥
स्पर्शादयोऽष्टौ वेगश्च गुरुत्वं च द्रवत्वकम् ।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥ ३१ ॥
स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश ।
बुद्ध्यादिषट्कं संख्यादि पञ्चकं भावना तथा॥३२॥

धर्म्माधर्म्मौ गुणा एते आत्मनः स्युश्चतुर्दश ।
संख्यादि पञ्चकं कालदिशोः शब्दश्च ते च खे॥३३॥
संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे ।
परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे ॥ ३४ ॥
तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता ।
षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥ ३५॥
स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः ।
नित्याऽनित्या च सा द्वेधा नित्या स्यादणुलक्षणा ३६
अनित्या तु तदन्या स्यात् सैवावयवयोगिनी ।
सा च त्रिधा भवेद्देह इन्द्रियं विषयस्तथा ॥ ३७ ॥
योनिजादिर्भवेद्देह इन्द्रियं घ्राणलक्षणम् ।
विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥३८॥
वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ ।
स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥
नित्यतादि प्रथमवत् किं तु देहमयोनिजम् ।
इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः ॥ ४० ॥
स्पर्श उष्णस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम् ।
नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्व्ववत् ॥ ४१॥
इन्द्रियं नयनं वह्निस्वर्णादिर्वि षयोमतः ।

अपाकजोऽनुष्णाशीतः स्पर्शस्तु पवने मतः ॥४२॥
तिर्य्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः ।
पूर्व्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥४३॥
प्राणादिस्तु महावायुपर्य्यन्तो विषयो मतः ।
आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥४४॥
इन्द्रियं तु भवेच्छ्रोत्रमेकः सन्नप्युपाधितः ।
जन्यानां जनकः कालो जगतामाश्रयो मतः ॥४५॥
परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ।
दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४६॥
उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् ।
आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्त्तृकम् ४७
शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः ।
तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ४८॥
मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् ।
धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥ ४९ ॥
प्रवृत्याद्यनुमेयोऽयं रथगत्येव सारथिः ।
अहङ्कारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥५०॥
विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता ।
अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्व्विधा ॥५१॥

प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ।
घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥५२॥
घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः ।
तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः ॥५३॥
उद्भूतरूपं नयनस्य गोचरो
द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये ।
विभागसंयोगपरापरत्व-
स्नेहद्रवत्वं परिमाणयुक्तम् ॥ ५४ ॥
क्रियां जातिं योग्यवृत्तिं समवायं च तादृशम् ।
गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयोः ॥५५॥
उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः ।
रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम् ॥५६॥
द्रव्याध्यक्षे त्वचो योगो मनसा ज्ञानकारणम् ।
मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः॥५७॥
ज्ञानं यन्निर्व्विकल्पाख्यं तदतीन्द्रियमिष्यते ।
महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥५८ ॥
विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः ।
द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः ॥ ५९ ॥
द्रव्येषु समवेतानां तथा तत्समवायतः ।

तत्रापि समवेतानां शब्दस्य समवायतः ॥ ६० ॥
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ।
विशेषणतया तद्वदभावानां ग्रहो भवेत् ॥ ६१ ॥
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ।
प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥ ६२ ॥
अलौकिकः सन्निकर्षस्त्रिविधः परिकीर्त्तितः ।
सामान्यलक्षणा ज्ञानलक्षणा योगजस्तथा ॥ ६३ ॥
आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते ।
तदिन्द्रियजतद्धर्म्मबोधसामग्र्यपेक्ष्यते ॥ ६४ ॥
विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ।
योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥ ६५ ॥
युक्तस्य सर्व्वदा भानं चिन्तासहकृतोऽपरः ।
व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥ ६६ ॥
अनुमायां ज्ञायमानं लिङ्गन्तु करणं न हि ।
अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६७ ॥
व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते ।
व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः ।
अथ वा हेतुमन्निष्ठविरहाप्रतियोगिना ॥ ६९ ॥
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ।

सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते ।
स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥७०॥
अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।
कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा॥ ॥७१॥
आद्यः साधारणस्तु स्यादसाधारणकोऽपरः ।
तथैवानुपसंहारी त्रिधाऽनैकान्तिको भवेत् ॥७२॥
यः सपक्षे विपक्षे च भवेत् साधारणस्तु सः ।
यस्तूभयस्माद् व्यावृत्तः स त्वसाधारणो मतः॥७३॥
तथैवानुपसंहारी केवलान्वयिपक्षकः ।
यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः॥७४॥
आश्रयासिद्धिराद्या स्यात् स्वरूपासिद्धिरप्यथ ।
व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ७५ ॥
पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः ।
ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥ ७६ ॥
व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत् ।
विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ॥७७॥
साध्यशून्योयत्रपक्षस्त्वसौ बाध उदाहृतः ।
उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ७८॥
ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।

साहृश्यधीर्गवादीनां या स्यात् सा करणं मतम् ७९
वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।
गवयादिपदानां तु शक्तिधीरुपमाफलम् ॥ ८०॥
पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी॥८१॥
लक्षणा शक्यसम्बन्धस्तात्पर्य्यानुपपत्तितः ।
आसत्तिर्योग्यताकाङ्क्षा तात्पर्य्यज्ञानमिष्यते ८२
कारणं सन्निधानं तु पदस्यासत्तिरुच्यते ।
पदार्थे तत्र तद्वत्ता योग्यता परिकीर्त्तिता ॥८३॥
यत्पदेन विना यस्यानन्नुभावकता भवेत् ।
आकाङ्क्षा वक्तुरिच्छा तु तात्पर्य्यं परिकीर्त्तितम्
साक्षात्कारे सुखादीनां करणं मन उच्यते ।
अयौगपद्याज् ज्ञानानां तस्याणुत्वमिहेष्यते॥८५॥
अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः ।
रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम् ॥ ८६ ॥
द्रवो गुरुत्वं स्नेहश्च वेगो मूर्त्तगुणा अमी ।
धर्म्माधर्म्मौ भावना च शब्दो बुद्ध्यादयोऽपि च८७
एतेऽमूर्त्तगुणाः सर्व्वे विद्वद्भिः परिकीर्त्तिताः ।
संख्यादयो विभागान्ता उभयेषां गुणा मताः ८८

संयोगश्च विभागश्च संख्या द्वित्वादिकास्तथा।
द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥८९॥
अतः शेषा गुणाः सर्व्वे मता एकैकवृत्तयः।
बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः
अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः।
संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा॥९१॥
गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्त्तिताः।
संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च ॥९२॥
एते तु द्वीन्द्रियग्राह्या अथ स्पर्शान्तशब्दकाः।
वाह्यैकैकेन्द्रियग्राह्या गुरुत्वादृष्टभावनाः ॥ ९३ ॥
अतीन्द्रिया विभूनां तु ये स्युर्वैशेषिका गुणाः।
अकारणगुणोत्पन्ना एते तु परिकीर्त्तिताः ॥ ९४ ॥
अपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम्।
स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥ ९५॥
स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः।
संयोगश्च विभागश्च वेगश्चैते तु कर्म्मजाः ॥९६
स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके।
भवेदसमवायित्वमथ वैशेषिके गुणे ॥ ९७ ॥
आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः।

वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥९८॥
द्विधैव कारणत्वं स्यादथ प्रादेशिको भवेत् ।
वैशेषिको विभुगुणः संयोगादिद्वयं तथा ॥ ९९ ॥
चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम् ।
चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ॥ १०० ॥
जलादिपरमाणौ तन्नित्यमन्यत् सहेतुकम् ।
रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥ १०१ ॥
सहकारी रसज्ञाया नित्यतादि च पूर्ववत् ।
घ्राणग्राह्यो भवेद् गन्धो घ्राणस्यैवोपकारकः॥१०२॥
सौरभं चासौरभं च स द्वेधा परिकीर्त्तितः ।
स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः १०३
अनुष्णाशीतशीतोष्णभेदात् स त्रिविधो मतः ।
काठिन्यादि क्षितावेव नित्यतादि च पूर्ववत् १०४
एतेषां पाकजत्वं तु क्षितौ नान्यत्र कुत्र चित् ।
तत्रापि परमाणौ स्यात् पाको वैशेषिके नये १०५
नैयायिकानां तु नये द्व्यणुकादावपीष्यते ।
गणनव्यवहारे तु हेतुः संख्याऽभिधीयते ॥१०६॥
नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते ।
द्वित्वादयः परार्द्धान्ता अपेक्षाबुद्धिजा मताः १०७॥

अनेकाश्रयपर्य्याप्ता एते तु परिकीर्त्तिताः ।
अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः ॥१०८॥
अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धिरुच्यते ।
परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥१०९॥
अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः ।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ११०
संख्यातः परिमाणाच्च प्रचयादपि जायते ।
अनित्यं द्व्यणुकादौ तु संख्याजन्यमुदाहृतम्॥१११
परिमाणं घटादौ तु परिमाणजमुच्यते ।
प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते॥११२॥
परिमाणं तूलकदौ नाशस्त्वाश्रयनाशतः ।
संख्यावत्तु पृथक्त्वं स्यात् पृथक्प्रत्ययकारणम्११३
अन्योन्याभावतो नास्य चरितार्थत्वमिष्यते ।
अस्मात् पृथगिदं नेति प्रतीतिर्हि विलक्षणा ११४
अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः ।
कीर्त्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्म्मजः ११५
तथोभयक्रियाजन्यो भवेत् संयोगजोऽपरः ।
आदिमःश्येनशैलादिसंयोगः परिकीर्त्तितः ११६
मेषयोः सन्निपातो यः स द्वितीय उदाहृतः ।

कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः ॥११७॥
तृतीयः स्यात् कर्म्मजोऽपि द्विधैव परिकीर्त्तितः ।
अभिघातो नोदनं च शब्दहेतुरिहादिमः ॥११८॥
शब्दाहेतुर्द्वितीयः स्याद्‌ विभागोपि त्रिधा भवेत्।
एककर्म्मोद्भवस्त्वाद्यो द्वयकर्म्मोद्भवोऽपरः ११९
विभागजस्तृतीयः स्यात्तृतीयोऽपि द्विधा भवेत्।
हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ॥१२०॥
परत्वं चापरत्वं च द्विविधं परिकीर्त्तितम् ।
दैशिकं कालिकं चेति मूर्त्त एव तु दैशिकम् ।१२१।
परत्वं मूर्तसंयोगभूयस्त्वज्ञानतो भवेत् ।
अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥१२२॥
तयोरसमवायी तु दिक्संयोगस्तदाश्रये ।
दिवाकरपरिस्पन्दभूयस्त्वज्ञानतो भवेत्॥ १२३ ॥
परत्वमपरत्वं तु तदीयाल्पत्वबुद्धितः ।
अत्र त्वसमवायी स्यात् संयोगः कालपिण्डयोः१२४
अपेक्षाबुद्धिनाशेन नाशस्तेषां निरूपितः ।
बुद्धेः प्रकारः प्रागेव प्रायशो विनिरूपितः ॥१२५॥
अथावशिष्टोऽप्यपरः प्रकारः परिदर्श्यते ।
अप्रमा च प्रमा चेति ज्ञानं द्विविधमिष्यते ॥१२६॥

तच्छून्ये तन्मतिर्य्या स्यादप्रमा सा निरूपिता ।
तत्प्रपञ्चो विपर्य्यासः संशयोऽपि प्रकीर्त्तितः ॥१२७
आद्यो देहे ष्वात्मबुद्धिः शङ्खादौ पीततामतिः ।
भवेन्निश्चयरूपा या संशयोऽथ प्रदर्श्यते ॥१२८॥
किंस्विन्नरो वा स्थाणुर्व्वेत्यादिबुद्धिस्तु संशयः ।
तदभावाप्रकाराधीस्तत्प्रकारा तु निश्चयः ॥१२९॥
स संशयो मतिर्या स्यादेकत्राभावभावयोः ।
साधारणादिधर्म्मस्य ज्ञानं संशयकारणम् ॥१३०॥
दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् ।
पित्तदूरत्वादिरूपो दोषो नानाविधो मतः ॥१३१॥
प्रत्यक्षे तु विशेष्येण विशेषणवता समम् ।
सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ गुणः॥१३२॥
पक्षे साध्यविशिष्टे च परामर्शो गुणो भवेत् ।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥१३३॥
शाब्दबोधे योग्यतायास्तात्पर्य्यस्याथ वा प्रमा ।
गुणः स्याद्भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा१३४
अथ वा तत्प्रकारं यज् ज्ञानं तद्वद्विशेष्यकम् ।
तत् प्रमा न प्रमा नापि भ्रमः स्यान्निर्व्विकल्पक-
म् ॥ १३५ ॥

प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत् ।
प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः ॥ १३६ ॥
व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा ।
हेतुर्व्याप्तिग्रहे तर्कः क्व चिच्छङ्कानिवर्त्तकः ॥१३७॥
साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा ।
स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते ॥ १३८॥
सर्व्वे साध्यसमानाधिकरणाः स्युरुपाधयः ।
हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥१३९॥
व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम् ।
शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते॥१४०॥
अनुमानगतार्थत्वादिति वैशेषिकं मतम् ।
तन्न सम्यग्विना व्याप्तिबोधं शाब्दादिबोधतः॥१४१
त्रैविध्यमनुमानस्य केवलान्वयिभेदतः ।
द्वैविध्यं तु भवेद् व्याप्तेरन्वयव्यतिरेकतः ॥१४२॥
अन्वयव्याप्तिरुक्तैव व्यतिरेकादथोच्यते ।
साध्याभावव्यापकत्वं हेत्वभावस्य यद् भवेत्१४३
अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते ।
व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः१४४
सुखं तु जगतामेव काम्यं धर्म्मेण जन्यते ।

अधर्म्मजन्यं दुःखं स्यात् प्रतिकूलं सचेतसाम्॥१४५
निर्दुर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते।
इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥१४६॥
चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत्।
तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥ १४७ ॥
बलवद्विष्टहेतुत्वमतिः स्यात् प्रतिबन्धिका।
तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥ १४८ ॥
द्विष्टसाधनताबुद्धिर्भवेद् द्वेषस्य कारणम्।
प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ १४९
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिदर्शितम्।
चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा॥१५०॥
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत्।
निवृत्तिस्तु भवेद् द्वेषाद् द्विष्टसाधनताधियः॥१५१
यत्नो जीवनयोनिस्तु सर्वदाऽतीन्द्रियो भवेत्।
शरीरे प्राणसञ्चारे कारणं स प्रकीर्त्तितः ॥१५२॥
अतीन्द्रियं गुरुत्वं स्यात् पृथिव्यादिद्वये तु तत्।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् १५३
तदेवासमवायि स्यात् पतनाख्ये तु कर्म्मणि।
सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् १५४

सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः ।
परमाणौ जले नित्यमन्यत्रानित्यमिष्यते ॥ १५५
नैमित्तिकं वह्नियोगात् तपनीयघृतादिषु ।
द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तत् ॥ १५६
स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ ।
तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता ॥ १५७ ॥
संस्कारभेदो वेगोऽथ
स्थितिस्थ पकभावने ।
मूर्त्तमात्रे तु वेगः स्यात्
कर्म्मजो वेगजः क्वचित् ॥ १५८ ॥
स्थितिस्थापकसंस्कारः
क्षितौ केचिच्चतुर्ष्वपि ।
अतीन्द्रियोऽसौ विज्ञेयः
क्वचित् स्पन्देऽपि कारण- म् ॥ १५९ ॥
भावनाख्यस्तु संसकारो जीववृत्तिरतीन्द्रियः ।
उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत ॥१६०॥
स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ।
धर्माधर्मावदृष्टं स्याद्धर्म्मः स्वर्गादिसाधनम्॥१६१
गङ्गास्नानादियागादिव्यापोरः स तु कीर्त्तितः ।

कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः॥१६२

अधर्मो नरकादीनां

हेतुर्निन्दितकर्मजः ।

प्रायश्चित्तादिनाश्योऽसौ

जीववृत्ती त्विमौ गुणौ ॥ १६३ ॥

इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः ।

शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ॥ १६४

कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ।

सर्व्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते॥१६५

वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता ।

कदम्बगोलकन्यायादुत्पत्तिः कस्य चिन्मते ॥१६६॥

उत्पन्नः को विनष्टः क इतिबुद्धेरनित्यता ।

सोऽयं क इतिबुद्धिस्तु साजात्यमवलम्बते ॥१६७॥

तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ।

इति श्रीविश्वनाथपञ्चाननिर्मितो

भाषापरिच्छेदः ॥

---

॥ श्रीः ॥

# ॥ श्रीगणेशाय नमः ॥

## न्यायसिद्धान्तमुक्तावली ।

चूडामणीकृतविधुर्वलयीकृतवासुकिः ।
भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥
निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्ति-
भिः । विशदीकरवाणि कौतुकान्ननु राजीव-
दयावशम्बदः ॥ २ ॥ सद्द्रव्या गुणगुम्फिता सुकृ-
तिनां सत्कर्मणां ज्ञापिका सत्सामान्यविशेषनि-
त्यमिलिताभावप्रकर्षोज्वला ॥ विष्णोर्वक्षसि वि-
श्वनाथकृतिना सिद्धान्तमुक्तावली विन्यस्ता मन-
सो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥

विघ्नविघातायं कृतं मङ्गलं शिष्यशिक्षायै नि-
बध्नाति । नूतनेति ।

नूतनजलधररुचये
गोपवधूटीदुकूलचौराय ।

तस्मै कृष्णाय नमः

ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणं विनापि मङ्गलं नास्तिकादीनां ग्रन्थे निर्विघ्नपरिसमाप्तिदर्शनादिति चेन्न। अविगीत-शिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे तत्र च फलजिज्ञासायां सम्भवति दृष्टफलकत्वेऽदृष्ट-फलकल्पनाया अन्याय्यत्वादुपस्थितत्वाच्च समाप्तिरेव हि फलं कल्पयते। इत्थं च यत्र मङ्गलं न दृश्यते तत्रापि जन्मान्तरीयं तत् कल्प्यते। यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्य्यं वा बोध्यम्। प्रचुरस्यैव चास्य बलवत्तरविघ्ननिराकरणकारणत्वम्। विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः

नव्यास्तु मङ्गलस्य विघ्नध्वंस एव फलम्, समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात्। नचैवं स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य निष्फलत्वापत्तिरिति वाच्यम्। इष्टापत्तेः, विघ्नाशङ्कया तदाचरणात्, तथैव शिष्टाचरणात्। न च तस्य निष्फलत्वे तद्बोधकशिष्टाचारानुमितवेदाप्रामा-

ण्यापत्तिरिति वाच्यम् । सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात् । अत एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यम् । मङ्गलं तु विघ्नध्वंसविशेषे कारणं विघ्नध्वंसविशेषे च विनायकस्तवपाठादिः । क्वचिच्च विघ्नात्यन्ताभाव एव समाप्तिसाधनं प्रतिबन्धकसंसर्गाभावस्यैव कार्य्यजनकत्वात् । इत्थं च नास्तिकादिकृतग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः, स्वतःसिद्धविघ्नात्यन्ताभावो वाऽस्तीति न व्यभिचार इत्याहुः ।

संसारमहीरुहस्य बीजाय ॥ १ ॥

संसारेति । संसार एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणायेत्यर्थः । एतेनेश्वरे प्रमाणमपि दर्शितं भवति । तथाहि । यथा घटादिकार्य्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि, न च तत्कर्तृत्वमस्मदादीनां सम्भवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः । न च शरीराजन्यत्वेन कर्त्रजन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यम् । अप्रयोजकत्वात् । मम तु कर्तृत्वेन कार्य्यत्वेन कार्य्य-

कारणभाव एवानुकूलस्तर्कः । "द्यावाभूमी जनयन्देव एक आस्ते विश्वस्य कर्त्ता भुवनस्य गोप्ता" इत्यादय आगमा अप्येवमनुसन्धेयाः ॥१॥

पदार्थान् विभजते। द्रव्यं गुण इत्यादि।

द्रव्यं गुणस्तथा कर्म्म
सामान्यं सविशेषकम् ॥
समवायस्तथाऽभावः
पदार्थाः सप्त कीर्त्तिताः ॥ २ ॥

सप्तमस्याभावत्वकथनादेव षण्णां भावत्वं प्राप्तं तेन भावत्वेन पृथगुपन्यासो न कृतः, एते च पदार्था वैशेषिकप्रसिद्धा नैयायिकानामप्यविरुद्धाः प्रतिपादितञ्चैवमेव भाष्ये। अत एवोपमानचिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्यादीनामतिरिक्तपदार्थत्वमाशङ्कितम्। ननु कथमेत एव पदार्थाः शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वात्, तथा हि मण्यादिसमवहितेन वह्निना दाहो न जन्यते तच्छून्येन तु जन्यते तत्र मण्यादिना वह्नौ दाहानुकूला शक्तिर्नाश्यते उत्तेजकेन मण्याद्यपसारणेन च जन्यत इति कल्प्यते, एवं सादृश्यमप्यतिरिक्तः प-

द्यर्थः, तद्धि न षट्सु पदार्थेष्वन्तर्भवति सामान्येऽपि सत्त्वात्, यथा गोत्वं नित्यं तथाऽश्वत्वमपीति सादृश्यप्रतीतेः, नाप्यभावे सत्त्वेन प्रतीयमानत्वादिति चेन्न। मण्याद्यभावविशिष्टवह्न्यादेर्दाहादिकं प्रति, स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वकल्पनेनैव सामञ्जस्येऽनन्तशक्तितत्प्रागभावध्वंसकल्पनानौचित्यात्। नचोत्तेजके सति प्रतिबन्धकसद्भावेऽपि कथं दाह इति वाच्यम्। उत्तेजकाभावविशिष्टमण्यभावस्य हेतुत्वात्। सादृश्यमपि न पदार्थान्तरं किन्तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्, यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति।

द्रव्याणि विभजते। क्षित्यबिति।

क्षित्यप्तेजोमरुद्व्योम-<br>
कालदिग्देहिनो मनः॥

द्रव्याणि,

एतानि नव द्रव्याणीत्यर्थः। ननु द्रव्यत्वजातौ किं मानम्, न हि तत्र प्रत्यक्षं प्रमाणम्, घृतज-

तुप्रभृतिषु द्रव्यत्वाग्रहादिति चेन्न । कार्य्यसमवायिकारणतावच्छेदकतया संयोगस्य विभागस्य वा समवायिकारणतावच्छेदकतया तत्सिद्धिरिति। ननु दशमं द्रव्यं तमः कुतो नोक्तम्, तद्धि प्रत्यक्षेण गृह्यते तस्य च रूपवत्वात् कर्मवत्वाच्च द्रव्यत्वम्, तच्च गन्धशून्यत्वान्न पृथिवी, नीलरूपवत्वाच्च न जलादिकम्, तत्प्रत्यक्षे चालोकनिरपेक्षं चक्षुः कारणमिति चेन्न । आवश्यकतेजोऽभावेनोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात् । रूपवत्ताप्रतीतिस्तु भ्रमरूपा, कर्मवत्वप्रतीतिरप्यालोकापसारणौपाधिकी भ्रान्तिरेव, तमसोऽतिरिक्तद्रव्यत्वेऽनन्तावयवादिकल्पनागौरवं च स्यात् । स्वर्णस्य यथा तेजस्यन्तर्भावस्तथा वक्ष्यते ।

गुणान् विभजते । अथ गुणा इति ।

अथ गुणा रूपं<br>
रसो गन्धस्ततः परम् ॥ ३ ॥<br>
स्पर्शः सख्या परिमितिः<br>
पृथक्त्वं च ततः परम् ॥<br>
संयोगश्च विभागश्च

परत्वं चापरत्वकम् ॥ ४ ॥
बुद्धिः सुखं दुःखमिच्छा
द्वेषो यत्नो गुरुत्वकम् ॥
द्रवत्वं स्नेहसंस्कारा-
वदृष्टं शब्द एव च ॥ ५ ॥

एते गुणाश्चतुर्विंशतिसंख्याकाः कणादेन कण्ठतश्चशब्देन च दर्शिताः । तत्र गुणत्वादिकजातिसिद्धिरग्रे वक्ष्यते ।

कर्माणि विभजते । उत्क्षेपणमिति ।

उत्क्षेपणं ततोऽपक्षे-
पणमाकुञ्चनं तथा ॥
प्रसारणं च गमनं
कर्माण्येतानि पञ्च च ॥ ६ ॥

कर्मत्वजातिस्तु प्रत्यक्षसिद्धा, एवमुत्क्षेपणत्वादिकमपि ।

नन्वत्र भ्रमणादिकमपि पञ्चकर्माधिकतया कुतो नोक्तमत आह । भ्रमणमित्यादि ।

भ्रमणं रेचनं स्पन्द-
नोर्द्ध्वज्वलनमेव च ॥

तिर्य्यग्गमनमप्यस्य
गमनादेव लभ्यते ॥ ७ ॥

सामान्यं निरूपयति । सामान्यमिति ।

सामान्यं द्विविधं प्रोक्तं
परं चापरमेव च ॥
द्रव्यादित्रिकवृत्तिस्तु
सत्ता परतयोच्यते ॥ ८ ॥

तल्लक्षणं तु नित्यत्वे सत्यनेकसमवेतत्वम् । अनेकसमवेतत्वं संयोगादीनामप्यस्त्यत उक्तं नित्यत्वे सतीति, नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्त्यत उक्तमनेकेति, नित्यत्वे सत्यनेकवृत्तित्वमत्यन्ताभावेऽप्यस्त्यतो वृत्तित्वसामान्यं विहाय समवेतत्वमित्युक्तम् । एकव्यक्तिवृत्तिस्तु न जातिः, तथा चोक्तं "व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः । रूपहानिरसम्बन्धो जातिबाधकसंग्रहः" इति । तत्रैकव्यक्तिकत्वादाकाशत्वं न जातिः। तुल्यव्यक्तिकत्वाद् घटत्वं कलसत्वं न जातिद्वयम्। सङ्कीर्णत्वाद् भूतत्वं मूर्त्तत्वं च न जातिः । अनवस्थाभयात् सामान्य-

त्वं न जातिः । विशेषस्य व्यावृत्तस्वभावस्य रूप-
हानिः स्यादतो विशेषत्वं न जातिः । समवायस-
म्बन्धाभावात् समवायो न जातिः ।

परत्वमधिकदेशवृत्तित्वम्, अपरत्वमल्पदे-
शवृत्तित्वम्, सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वा-
त् सत्तायाः परत्वम्, एतद्बोधनायैव द्रव्यादित्रि-
कवृत्तिरित्युक्तम्, तदपेक्षया चान्यासां जातीना-
मपरत्वम् ।

परभिन्ना तु या जातिः
सैवापरतयोच्यते ।

परभिन्ना सत्ताभिन्ना ।

द्रव्यत्वादिकजातिस्तु
परापरतयोच्यते ॥ ९ ॥
व्यापकत्वात् परापि स्याद्
व्याप्यत्वादपरापि च ॥

व्यापकत्वादिति । पृथिवीत्वाद्यपेक्षया व्याप-
कत्वादधिकदेशवृत्तित्वाद् द्रव्यत्वादेः परत्वम् ।
सत्तापेक्षया व्याप्यत्वादल्पदेशवृत्तित्वाच्च द्रव्य-
त्वस्यापरत्वम् । तथा च धर्मद्वयसमावेशादुभयम-

विरुद्धम् ।

विशेषं निरूपयति । अन्त्य इति ।

अन्त्यो नित्यद्रव्यवृत्ति-
र्विशेषः परिकीर्त्तितः ॥ १० ॥

अन्तेऽवसाने वर्त्तत इत्यन्त्यो यदपेक्षया विशेषो नास्तीत्यर्थः, एकमात्रवृत्तिरिति फलितार्थः, घटादीनां द्व्यणुकपर्य्यन्तानां तत्तदवयवभेदात् परस्परं भेदः, परमाणूनां परस्परं भेदको विशेष एव स तु स्वत एव व्यावृत्तस्तेन तत्र विशेषान्तरापेक्षा नास्तीति भावः ।

समवायं दर्शयति । घटादीनामिति ।

घटादीनां कपालादौ
द्रव्येषु गुणकर्म्मणोः ।
तेषु जातेश्च सम्बन्धः
समवायः प्रकीर्त्तितः ॥ ११ ॥

अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः सम्बन्धः स समवायः । समवायत्वं नित्यसम्बन्धत्वम् । तत्र प्रमाणं तु गुणक्रियादिविशिष्टबुद्धिर्विशेषण-

विशेष्यसम्बन्धविषया विशिष्टबुद्धित्वाद् दण्डी-पुरुष इति विशिष्टबुद्धिवदित्यनुमानेन संयोगादिबाधात् समवायसिद्धिः। न च स्वरूपसम्बन्धेन सिद्धसाधनम्, अर्थान्तरं वा। अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवाल्लाघवादेकसमवायसिद्धेः । न च समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः । तत्र रूपसमवायसत्त्वेऽपि रूपाभावात्। नचैवमभावस्यापि वैशिष्ट्यं सम्बन्धान्तरं सिध्येदिति वाच्यम्। तस्य नित्यत्वे भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गात् घटाभावस्य तत्र सत्त्वात् तस्य च नित्यत्वात्, अन्यथ देशान्तरेऽपि तत्प्रतीतिर्न स्यात्, वैशिष्ट्यस्य च तत्र सत्त्वात्। मम तु मते घटे पाकरक्ततादशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः । वैशिष्ट्यस्यानित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तवैव गौरवम् । इत्थं च तत्तत्कालीनतत्तद्भूतलादिकं तत्तदभावानां सम्बन्धः ।

अभावं विभजते । अभावस्त्विति ॥

अभावस्तु द्विधा संस-

र्गान्योन्याभावभेदतः ।

अभावत्वं द्रव्यादिषट्कान्योन्याभाववत्त्वम् । संसर्गेति । संसर्गाभावान्योन्याभावभेदादित्यर्थः ।

अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावात् संसर्गाभावं विभजते । प्रागभाव इति ।

प्रागभावस्तथा ध्वंसोऽ-

प्यत्यन्ताभाव एव च ॥१२॥

एवं त्रैविध्यमापन्नः

संसर्गाभाव इष्यते ।

संसर्गाभावत्वमन्योन्याभावभिन्नाभावत्वम् । अन्योन्याभावत्वं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । विनाश्यभावत्वं प्रागभावत्वम् । जन्याभावत्वं ध्वंसत्वम् । नित्यसंसर्गाभावत्वमत्यन्ताभावत्वम् । यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतं च तत्र घटकालस्य सम्बन्धाघटकतयाऽत्यन्ताभावस्य नित्यत्वेऽपि घटकाले न घटात्यन्ताभावबुद्धिः । ततोत्पादविनाशशाली चतुर्थोऽयमभाव इति केचित् । अत्र ध्वंसप्रागभावयोरधिकरणे नात्य-

न्ताभाव इति प्राचीनमतम् । श्यामघटे रक्तो नास्तीति, रक्तघटे श्यामो नास्तीति धीश्च प्रागभावं ध्वंसं चावगाहते न तु तदत्यन्ताभावम् । नव्यास्तु तत्र विरोधे मानाभावादुत्पादिकालावच्छेदेनाप्यत्यन्ताभावो वर्त्तत इति प्राहुः । नन्वस्त्वभावानामधिकरणात्मकत्वं लाघवादिति चेन्न । अनन्ताधिकरणात्मकत्वकल्पनामपेक्ष्यातिरिक्तकल्पनाया एव लघीयस्त्वात् । एवं चाधाराधेयभावोऽप्युपपद्यते । एवं च तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वमुपपद्यते । अन्यथा तत्तदधिकरणानां तत्तदिन्द्रियाग्राह्यत्वादप्रत्यक्षत्वं स्यात् । एतेन ज्ञानविशेषकालविशेषाद्यात्मकत्वमत्यन्ताभावस्येति प्रत्युक्तम्, अप्रत्यक्षत्वापत्तेः ।

इदानीं पदार्थानां साधर्म्यं वैधर्म्यं च वक्तुं प्रक्रमते । सप्तानामित्यादि ।

सप्तानामपि साधर्म्यं
ज्ञेयत्वादिकमुच्यते ॥ १३ ॥

समानो धर्मो येषां ते धर्माणस्तेषां भावः

साधर्म्यं समानो धर्म इति फलितार्थः । एवं वि-
रुद्धो धर्मो येषां ते विधर्माणस्तेषां भावो वैध-
र्म्यं विरुद्धो धर्म्म इति फलितार्थः । ज्ञेयत्वं
ज्ञानविषयता सा च सर्व्वत्रैवास्ति, ईश्वरादिज्ञा-
नविषयतायाः केवलान्वयित्वात् । एवमभिधे-
यत्वप्रमेयत्वादिकं बोध्यम् ।

द्रव्यादयः पञ्च भावा
अनेके समवायिनः ।

द्रव्येति । द्रव्यगुणकर्मसामान्यविशेषाणां सा
धर्म्यमनेकत्वं समवायित्वं च । यद्यप्यनेकत्वमभा-
वेऽप्यस्ति तथाप्यनेकत्वे सति भावत्वं पञ्चानां सा-
धर्म्म्यम् । तथा चानेकभाववृत्तिपदार्थविभा-
जकोपाधिमत्त्वं फलितार्थः, तेन प्रत्येकं घटादा-
वाकाशादौ च नाव्याप्तिः । समवायित्वं समवा-
यसम्बन्धेन सम्बन्धित्वं न तु समवायवत्त्वं-
सामान्यादावभावात् । (तथा च समवेतवृत्ति-
पदार्थविभाजकोपाधिमत्त्वं फलितार्थः, तेन नि-
त्यद्रव्येषु नाव्याप्तिः ।)

सत्तावन्तस्त्रयस्त्वाद्याः

सत्तावन्त इति । द्रव्यगुणकर्म्मणां सत्तावत्त्वमित्यर्थः ।

गुणादिर्निर्गुणक्रियः ॥ १४ ॥

गुणादिरिति । यद्यपि गुणक्रियाशून्यत्वमाद्यक्षणे घटादावतिव्याप्तम्, क्रियाशून्यत्वं च गगनादावतिव्याप्तम् । तथापि गुणवदवृत्तिधर्म्मवत्त्वं कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं तदर्थः । न हि घटत्वादिकं द्रव्यत्वं वा गुणवदवृत्ति कर्मवदवृत्ति वा किन्तु गुणत्वादिकं तथा, आकाशत्वादिकं तु न पदार्थविभाजकोपाधिः । यद्वा गुणवदवृत्तित्वे सति कर्मवदवृत्तित्वे सति वा सत्ताव्याप्यजातिशून्यभावत्वं विवक्षितम् । गुणकर्मणोरव्याप्तिवारणाय गुणवद्वृत्तिकर्मवद्वृत्तीति वा । पुनस्तत्रैव व्याप्तिवारणाय सत्ताव्याप्येति । व्याप्तिश्च भेदवाव्याप्तिवारणाय सत्ताव्याप्येति । व्याप्तिश्च भेदगर्भा निवेशितेत्यतो न दोषः । द्रव्यगुणान्यतरत्वमादाय तत्रैवाव्याप्तिवारणाय जातीति । अत्वमादाय तत्रैवाव्याप्तिवारणाय भावत्वमिति । गुणवभावेऽतिव्याप्तिवारणाय भावत्वमिति । गुणवद्वृत्तिः सत्ताव्याप्यजातिर्द्रव्यत्वं तच्छून्यत्वं पञ्चानामस्त्येव ॥

सामान्यपरिहीनास्तु
सर्व्वे जात्यादयो मताः ।

सामान्येति । सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः ।

पारिमाण्डल्यभिन्नानां
कारणत्वमुदाहृतम् ॥ १५ ॥

पारिमाण्डल्येति । पारिमाण्डल्यमणुपरिमाणम्, कारणत्वं तद्भिन्नानामित्यर्थः । अणुपरिमाणं तु न कस्यापि कारणम् । तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत्, तच्च न सम्भवति, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमान्महदारब्धस्य महत्तरत्ववदणुजन्यस्याणुतरत्वप्रसङ्गात् । एवं परममहत्परिमाणमतीन्द्रियसामान्यं विशेषाश्च बोध्याः । इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वम्, ज्ञायमानं सामान्यं न प्रत्यासत्तिः, ज्ञायमानं लिङ्गं नानुमितिकरणमित्यभिप्रायेण । मानसप्रत्यक्ष आत्ममहत्त्वस्य कारणत्वान्महत्परिमाणं कालादेर्बोध्यम् । तस्यापि न कारणत्वमित्याचार्य्याणामाशय इत्य-

न्ये । तन्न । ज्ञानातिरिक्तं प्रत्येवाकारणताया
आचार्यैरुक्तत्वात् ।

ननु कारणत्वं किमत आह । अन्यथेति ।

अन्यथासिद्धिशून्यस्य
नियता पूर्व्ववर्त्तिता ।
कारणत्वं भवेत् तस्य
त्रैविध्यं परिकीर्त्तितम् ॥ १६ ॥
समवायिकारणत्वं
ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥
एवं न्यायनयज्ञै-
स्तृतीयमुक्तं निमित्तहेतुत्वम् ॥१७॥
यत्समवेतं कार्य्यं
भवति ज्ञेयं तु समवायिजनकं तत् ॥
तत्रासन्नं जनकं
द्वितीयमाभ्यां परं तृतीयं स्यात्१८

तस्य कारणत्वस्य । तत् समवायिकारणं ।
आसन्नं प्रत्यासन्नं कारणं द्वितीयमसमवायिका-
रणमित्यर्थः । अत्र यद्यपि तुरीतन्तुसंयोगानां
पटासमवायिकारणत्वं स्यात्, एवं वेगादीना-

त्वादिकारणे चासमवायिकारणत्वं स्यात्, एवं-
मप्यभिघातादावसमवायिकारणं स्यात् । तथाऽ-
ज्ञानादिकमिच्छादावसमवायिकारणं स्यात् । तुरीतन्तुसंयोगमभि-
पि पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगं
न्नत्वं देयम्, तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं
प्रत्यसमवायिकारणं भवत्येव । एवं वेगादिकम-
पि वेगस्पन्दादावसमवायिकारणं भवत्येवेति तत्रा-
त्कार्य्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं देय-
म् । आत्मविशेषगुणानां तु कुत्राप्यसमवायिकार-
णत्वं नास्ति, तेन तद्भिन्नत्वं सामान्यलक्षणे देयमे-
व । अत्र समवायिकारणे प्रत्यासन्नं द्विविधम्,
कार्य्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च ।
आद्यं यथा घटादिकं प्रति कपालसंयोगादिकम्,
तत्र कार्य्येण घटेन सह कारणस्य कपालसंयोग-
स्यैकस्मिन् कपाले प्रत्यासत्तिरस्ति । द्वितीयं यथा
घटरूपं प्रति कपालरूपमसमवायिकारणम्, तत्र
घटरूपं प्रति कारणं घटस्तेन सह कपालरूपस्यै-
कस्मिन् कपाले प्रत्यासत्तिरस्ति । तथा च क्वचि-
त् समवायसम्बन्धेन क्वचित् स्वसमवायिसमवाय-
सम्बन्धेनेति, फलितोऽर्थः । इत्थं चकार्य्यैकार्थका-

रणैकार्थान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्यलक्षणं पर्य्यवसन्नम्। आभ्यां समवायिकारणासमवायिकारणाभ्यां परं भिन्नं कारणं तृतीयं निमित्तकारणमित्यर्थः।

इदानीमन्यथासिद्धत्वमेव कियतां पदार्थानां तदाह। येनेत्यादिना।

येन सह पूर्व्वभावः

यत्कार्य्यं प्रति कारणस्य पूर्व्ववर्त्तिता येन रूपेण गृह्यते तत्कार्य्यं प्रति तद्रूपमन्यथासिद्धमिति भावः। यथा घटं प्रति दण्डत्वमिति।

द्वितीयमन्यथासिद्धमाह। कारणमिति।

कारणमादाय वा यस्य।

यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः किं तु कारणमादायैवान्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धम्, यथा दण्डरूपम्।

तृतीयमाह। अन्यं प्रतीति।

अन्यं प्रति पूर्व्वभावे

ज्ञाते यत्पूर्व्वभावविज्ञानम् ॥ १९॥

अन्यं प्रति पूर्व्ववर्त्तित्वं गृहीत्वैव यस्य यत् कार्य्यं प्रति पूर्व्ववर्त्तित्वं गृह्यते तस्य तत्कार्य्यं प्रत्यन्यथासिद्धत्वम्, यथा घटादिकं प्रत्याकाशस्य। आकाशस्य हि घटादिकं प्रत्याकाशत्वेनैव कारणत्वं स्यात्, आकाशत्वं च शब्दसमवायिकारणत्वम्, अतः शब्दं प्रति जनकत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम्। शब्दाश्रयत्वेन कारणत्वे काऽन्यथासिद्धिरिति चेत्, पञ्चमीति गृहाण। अथाकाशस्य शब्दं प्रति जनकत्वे किमवच्छेदकमिति चेत्, कवत्त्वादिकं विशेषपदार्थो वेति।

चतुर्थमन्यथासिद्धमाह। जनकं प्रतीति।

जनकं प्रति पूर्व्ववर्त्तिता-

मपरिज्ञाय न यस्य गृह्यते।

यत्कार्य्यजनकं प्रति पूर्व्ववर्त्तित्वं गृहीत्वैव यस्य यत्कार्य्यं प्रति पूर्व्ववर्त्तित्वं गृह्यते तस्य तत्कार्य्यं प्रत्यन्यथासिद्धत्वं यथा कुलालपितुर्घटं प्रति। तस्य च कुलालपितृत्वेन घटं प्रति जनकत्व एवान्यथासिद्धिः, कुलालत्वेन जनकत्वे त्वि-

ष्टापत्तिः, कुलालमातस्य घटं प्रति जनकत्वात्।

पञ्चममन्यथासिद्धमाह । अतिरिक्तमिति ।

अतिरिक्तमथापि यद्व भवेद्व
नियतावश्यकपूर्व्वभाविनः ॥ २० ॥
एते पञ्चान्यथासिद्धाः

नियतावश्यकपूर्व्वभाविनोऽवश्यक्लृप्तनियतपूर्व्ववर्त्तिन एव कार्य्यसम्भवे तद्भिन्नमन्यथासिद्धमित्यर्थः। अत एव प्रत्यक्षे महत्त्वं कारणमनेकद्रव्यवत्त्वमन्यथासिद्धम्, तत्र हि महत्त्वमवश्यं क्लृप्तं तेनानेकद्रव्यवत्त्वमन्यथासिद्धम्, न च वैपरीत्ये किं विनिगमकमिति वाच्यम्। महत्त्वत्यजातेः कारणतावच्छेदकत्वे लाघवात्।

दण्डत्वादिकमादिमम् ।
घटादौ दण्डरूपादि
द्वितीयमपि दर्शितम् ॥ २१ ॥
तृतीयं तु भवेद्व व्योम
कुलालजनकोऽपरः ।
पञ्चमो रासभादिः स्यात्

रासभादिरिति। यद्घटव्यक्तिं प्रति रासभस्य-

नियतपूर्व्ववर्त्तित्वमस्ति तत्रापि घटजातीयं प्रति सिद्धकारणभावैर्दण्डादिभिरेव तद्व्यक्तेरपि सम्भवे रासभोऽन्यथासिद्ध इति भावः ।

एतेष्वावश्यकस्त्वसौ ॥ २२ ॥

एतेष्विति । एतेषु पञ्चस्वन्यथासिद्धेषु पञ्चमोऽन्यथासिद्ध आवश्यकः, तेनैव परेषां चरितार्थत्वात् । तथाहि दण्डादिभिरवश्यक्लृप्तनियतपूर्व्ववर्त्तिभिरेव कार्य्यसम्भवे दण्डत्वादिकमन्यथासिद्धम् । न च वैपरीत्ये किं विनिगमकमिति वाच्यम् । दण्डत्वस्य कारणत्वे दण्डघटितपरम्परायाः सम्बन्धत्वकल्पने गौरवात् । एवमन्येषामप्यनेनैव चरितार्थत्वं सम्भवतीति ।

समवायिकारणत्वं
द्रव्यस्यैवेति विज्ञेयम् ।
गुणकर्म्ममात्रवृत्ति
ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥२३॥

गुणकर्म्मेति । असमवायिकारणत्वं गुणकर्म्मभिन्नानां वैधर्म्म्यं न तु गुणकर्मणोः साधर्म्म्यमित्यत्र तात्पर्य्यम् । अथ वाऽसमवायिकारणवृ-

त्तिसत्ताभिन्नजातिमत्त्वं तदर्थः, तेन ज्ञानादीनामसमवायिकारणत्वविरहेऽपि न क्षतिः ।

अन्यत्र नित्यद्रव्येभ्य
आश्रितत्वमिहोच्यते ।

अन्यत्रेति । नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं साधर्म्यमित्यर्थः । आश्रितत्वं तु समवायादिसम्बन्धेन वृत्तिमत्त्वम् । विशेषणतया नित्यानामपि कालादौ वृत्तेः । कालिकसम्बन्धान्यसम्बन्धेनावृत्तित्वमिति परमार्थः, तेन समवायेनावृत्तावपि न क्षतिः ।

इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते । क्षित्यादीनामिति ।

क्षित्यादीनां नवानां तु
द्रव्यत्वं गुणयोगिता ॥२४॥
क्षितिर्जलं तथा तेजः
पवनो मन एव च ।
परापरत्वमूर्त्तत्व-
क्रियावेगाश्रया अमी ॥ २५ ॥

क्षितिर्जलमिति । पृथिव्यप्तेजोवायुमनसां पर-

त्वापरत्ववत्त्वं मूर्त्तत्वं क्रियावत्त्वं वेगवत्त्वं च सा-
धर्म्यम् । न च यत्र घटादौ परत्वमपरत्वं वा नो-
त्पन्नं तत्राव्याप्तिरिति वाच्यम् । परत्वादिसमाना-
धिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वा-
त् । मूर्त्तत्वमपकृष्टपरिमाणवत्त्वम् , तच्च तेषामेव,
गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात् ।
पूर्व्ववत् कर्म्मवत्त्वं कर्म्मसमानाधिकरणद्रव्यत्वव्या-
व्याप्यजातिमत्त्वं वेगवत्त्वं वेगवद्वृत्तिद्रव्यत्वव्या-
प्यजातिमत्त्वं च बोध्यम् ।

कालखात्मदिशां सर्व्व-
गतत्वं परमं महत् ।

कालेति । कालाकाशात्मदिशां सर्व्वगतत्वं स-
र्व्वमूर्त्तसंयोगित्वं परममहत्त्वं च । परममहत्त्वत्वं
जातिविशेषः, अपकर्षानाश्रयपरिमाणत्वं वा ।

क्षित्यादौ पञ्चभूतानि

क्षित्यादाविति । पृथिव्यप्तेजोवाय्वाकाशा-
नां भूतत्वम् । तच्च बहिरिन्द्रियग्राह्यविशेषगु-
णवत्त्वम् । अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूप-
योग्यत्वं बोध्यम्, तेन ज्ञातो घट इति प्रत्यक्षे ज्ञा-

नस्याप्युपनीतभानविषयत्वात् तद्वृत्त्यात्मनि नातिप्रसङ्गः। न वा प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिः, तस्यापि स्वरूपयोग्यत्वात्। महत्त्वलक्षणकारणान्तरासन्निधानाच्च न प्रत्यक्षम्। अथ वाऽऽत्मावृत्तिविशेषगुणवत्त्वं तत्त्वम्।

चत्वारि स्पर्शवन्ति हि ॥२६॥

चत्वारीति। पृथिव्यप्तेजोवायूनां स्पर्शवत्त्वम्।

द्रव्यारम्भश्चतुर्षु स्यात्

द्रव्यारम्भ इति। पृथिव्यप्तेजोवायुषु चतुर्षु द्रव्यारम्भकत्वम्। न च द्रव्यानारम्भके घटादावव्याप्तिः। द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्।

अथाकाशशरीरिणाम्।

अव्याप्यवृत्तिः क्षणिको

विशेषगुण इष्यते ॥ २७ ॥

आकाशशरीरिणामिति। आकाशात्मनामव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वम्। आकाशस्य विशेषगुणः शब्दः स चाव्याप्यवृत्तिर्यदाकिं

चिदवच्छेदेन शब्द उत्पद्यते तदान्यावच्छेदेन त-
दभावस्यापि सत्त्वात् । क्षणिकत्वं च तृतीय-
क्षणवृत्तिध्वंसप्रतियोगित्वम् । योग्यविभुविशे-
षगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वात् प्रथमशब्द-
स्य द्वितीयशब्देन नाशः । एवं ज्ञानादीनाम-
पि । ज्ञानादिकं ह्यात्मनि विभौ शरीराद्यवच्छे-
देनोत्पद्यते घटाद्यवच्छेदेन तदभावोऽस्त्येव ।
एवं ज्ञानादिकमपि क्षणद्वयावस्थायि । इत्थं चा-
व्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणव-
त्त्वं चार्थः । पृथिव्यादौ रूपादिर्विशेषगुणोऽस्ती-
त्यतोऽव्याप्यवृत्तिरित्युक्तम् । पृथिव्यादावव्या-
प्यवृत्तिः संयोगादिरस्तीत्यतो विशेषगुण इत्यु-
क्तम् । न च रूपादीनामपि कदाचित् तृतीयक्षणे
नाशसम्भवात् क्षणिकविशेषगुणवत्त्वं क्षित्या-
दावतिव्याप्तमिति वाच्यम् । चतुःक्षणवृत्तिजन्या-
वृत्तिजातिमद्विशेषगुणवत्त्वस्य विवक्षितत्वात् ।
अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति क्षणचतुष्टयं तु कि-
मपि जन्यज्ञानादिकं न तिष्ठति, रूपत्वादि-
कं तु क्षणचतुष्टयस्थायिन्यपि रूपादौ वर्त्तत इ-

ति व्युदासः। ईश्वरज्ञानस्य चतुःक्षणवृत्तित्वा-
ज्जन्येत्युक्तम्। यद्वाकाशजीवात्मनोः साधर्म्यं
तदा जन्येति न देयम्, द्वेषत्वादिकमादाय ल-
क्षणसमन्वयात्। परममहत्त्वस्य तादृशगुणत्वाच्च-
तुर्थक्षणे द्वित्वादीनामपि नाशाभ्युपगमाद् द्वि-
त्वादीनामपि तथात्वात् तद्वारणाय विशेषेति
त्रिक्षणवृत्तित्वं वा वाच्यम्। द्वेषत्वादिकमादा-
यात्मनि लक्षणसमन्वयः।

रूपद्रवत्वप्रत्यक्ष-
योगि स्यात् प्रथमत्रिकम्।

रूपेति। पृथिव्यप्तेजसां रूपवत्त्वं द्रवत्वव-
त्त्वं प्रत्यक्षविषयत्वं चेत्यर्थः। न च चक्षुरादी-
नां भर्जनकपालस्थवन्हेरूष्मणश्च रूपवत्त्वे किं
मानमिति वाच्यम्। तत्रापि तेजस्त्वेन रूपानु-
मानात्। एवं वाय्वानीतपृथिवीजलतेजोभा-
गानामपि पृथिवीत्वादिना रूपानुमानं बोध्यम्।
न च घटादौ द्रुतसुवर्णादिभिन्ने तेजसि च द्रव-
त्ववत्त्वमव्याप्तमिति वाच्यम्। द्रवत्ववद्वृत्ति-
द्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। घ-

तज्जतुप्रभृतिषु पृथिवीषु, जलेषु, द्रुतसुवर्णादौ ते-
जसि, च द्रवत्वसत्त्वात् तत्र च पृथिवीत्वा-
दिसत्त्वात्तदादाय सर्व्वत्र लक्षणसमन्वयः। न च प्र-
त्यक्षविषयत्वं परमाण्वादावव्याप्तम्, अतिव्या-
प्तं च रूपादाविति वाच्यम्। चाक्षुषप्रत्यक्षविषय-
वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्।
आत्मन्यतिव्याप्तिवारणाय चाक्षुषेति।

गुरुणी द्वे रसवती

गुरुणी इति। गुरुत्ववत्त्वं रसवत्त्वं च पृथिवी-
जलयोरित्यर्थः। न च घ्राणेन्द्रियादीनां वाय्वा-
नीतपार्थिवादिभागानां च रसादिमत्त्वे किं मा-
नमिति वाच्यम्। तत्रापि पृथिवीत्वादिना तद-
नुमानात्।

द्वयोर्नैमित्तिको द्रवः ॥ २८॥

द्वयोरिति। पृथिवीतेजसोरित्यर्थः। न च
नैमित्तिकद्रवत्ववत्त्वं घटादौ वह्न्यादौ चाव्याप्त-
मिति वाच्यम्। नैमित्तिकद्रवत्वसमानाधिकरण-
द्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्।

आत्मानो भूतवर्गाश्च

विशेषगुणयोगिनः ।

आत्मान इति । पृथिव्यप्तेजोवाय्वाकाशा-
त्मनां विशेषगुणवत्त्वमित्यर्थः ।

यदुक्तं यस्य साधर्म्यं
वैधर्म्यमितरस्य तत् ॥ २९ ॥

यदुक्तमिति । ज्ञेयत्वादिकं विहायेति बोध्यम्
तत्तु न कस्यापि वैधर्म्यं केवलान्वयित्वात् ।

स्पर्शादयोऽष्टौ वेगाख्य-
संस्कारो मरुतो गुणाः ।
अष्टौ स्पर्शादयो रूपं
द्रवो वेगश्च तेजसि ॥ ३० ॥
स्पर्शादयोऽष्टौ वेगश्च
गुरुत्वं च द्रवत्वकम् ।
रूपं रसस्तथा स्नेहो
वारिण्येते चतुर्दश ॥ ३१ ॥
स्नेहहीना गन्धयुताः
क्षितावेते चतुर्दश ।
बुद्ध्यादिषट्कं संख्यादि-
पञ्चकं भावना तथा ॥ ३२ ॥

धर्म्माधर्म्मौ गुणा एते
आत्मनः स्युश्चतुर्दश ।
संख्यादिपञ्चकं काल-
दिशोः शब्दश्च ते च खे ॥ ३३ ॥
संख्यादयः पञ्च बुद्धि-
रिच्छा यत्नोऽपि चेश्वरे ।
परापरत्वे संख्याद्याः
पञ्च वेगश्च मानसे ॥ ३४ ॥

ते च सङ्ख्यादयः पञ्च खे आकाशे ।

साधर्म्यवैधर्म्ये निरूप्य संप्रति प्रत्येकं पृथिव्यादिकं निरूपयति । तत्र क्षितिरित्यादिना ।

तत्र क्षितिर्गन्धहेतुः

गन्धहेतुरिति । गन्धसमवायिकारणमित्यर्थः । यद्यपि गन्धवत्त्वमात्रं लक्षणमुचितम् । तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुपन्यस्तम् । तथाहि । पृथिवीत्वं हि गन्धसमवायिकारणतावच्छेदकतया सिध्यति, अन्यथा गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्तेः । न च पाषाणादौ गन्धाभावाद्गन्धवत्त्वमव्याप्तमिति वा-

ध्यम् । तत्रापि गन्धसत्त्वात् । अनुपलब्धिस्त्व-नुत्कटत्वेनाप्युपपद्यते, कथमन्यथा तद्भस्मनि गन्ध उपलभ्यते॥ भस्मनो हि पाषाणध्वंसजन्यत्वात् पाषाणोपादानोपादेयत्वं सिध्यति, यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तेः, दृष्टंचैतत् खण्डपटे महापटध्वंसजन्ये । इत्थं च पाषाणपरमाणोः पृथिवीत्वात्तज्जन्यस्य पाषाणस्यापि पृथिवीत्वम्, तथा च तस्यापि गन्धवत्त्वे बाधकाभावः ।

नानारूपवती मता ।

नानारूपेति। शुक्लनीलादिभेदेन नानाजातीयं रूपं पृथिव्यामेव वर्त्तते न तु जलादौ तत्र शुक्लस्यैव सत्त्वात्, पृथिव्यां त्वेकस्मिन्नपि धर्मिणि पाकवशेन नानारूपसम्भवात् । न च यत्र नानारूपं नोत्पन्नं तत्राव्याप्तिः । रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य, रूपनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य वा वाच्यत्वात् । वैशेषिकनये पृथिवीपरमाणौ रूपनाशस्य रूपान्तरस्य च सत्त्वात्, न्यायनये घटादावपि तत्सत्त्वाल्लक्ष-

यासमन्वयः ।

षड्विधस्तु रसस्तत्र

षड्विध इति । मधुरकटुकषायादिभेदेन षः
षड्विधो रसः स पृथिव्यामेव, जले च मधुर एव
रसः । अत्रापि पूर्ववद्रसद्वयवद्वृत्तिद्रव्यत्व-
व्याप्यजातिमत्त्वं लक्षणार्थोऽवसेयः ।

गन्धस्तु द्विविधो मतः ॥ ३९ ॥

गन्धस्त्विति । द्विविध इति वस्तुस्थितिमात्रं
न तु द्विविधगन्धवत्त्वं लक्षणं द्विविधत्वस्य व्य-
र्थत्वात् । द्वैविध्यं च सौरभासौरभभेदेन बोध्यम् ।

स्पर्शस्तस्यास्तु विज्ञेयो
ह्यनुष्णाशीतपाकजः ।

स्पर्श इति । तस्याः पृथिव्याः, अनुष्णाशी-
तस्पर्शवत्त्वं वायोरपि वर्त्तत इत्युक्तं पाकज इति ।
इत्थं च पृथिव्याः स्पर्शोऽनुष्णाशीत इति ज्ञा-
पनार्थं तदुक्तम्, लक्षणं तु पाकजस्पर्शवत्त्वमा-
त्रम्, । अधिकस्य वैयर्थ्यात् । यद्यपि पाकज-
स्पर्शः पटादौ नास्ति । तथापि पाकजस्पर्शवद्वृ-
त्तिद्रव्यत्वव्याप्यजातिमत्त्वमर्थो बोध्यः ।

नित्याऽनित्या च सा द्वेधा
नित्या स्यादणुलक्षणा ॥ ३६ ॥
अनित्या तु तदन्या स्यात्
सैवावयवयोगिनी ।

नित्येति । सा पृथिवी द्विविधा नित्याऽनित्या चेत्यर्थः । अणुलक्षणा परमाणुरूपा पृथिवी नित्या । तदन्या परमाणुभिन्ना पृथिवी द्व्यणुकादिरूपा सर्व्वाऽप्यनित्येत्यर्थः । सैवानित्या पृथिव्येवावयववतीत्यर्थः । नन्ववयविनि किं मानं परमाणुपुञ्जैरेवोपपत्तेः, न च परमाणूनामतीन्द्रियत्वाद् घटादेः प्रत्यक्षं न स्यादिति वाच्यम्, एकस्य परमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वसम्भवात्, यथैकस्य केशस्य दूरेऽप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वम्, न चैकः स्थूलो महान् घट इति बुद्धेरनुपपत्तिरिति वाच्यम्, एको महान् धान्यराशिरितिवदुपपत्तेः । मैवम्, परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षत्वायोगात् । दूरस्थकेशस्तु नातीन्द्रियः, सन्निधाने तस्यैव प्रत्यक्षत्वात् । न च तदानीमहस्य-

परमाणुपुञ्जाद् दृश्यपरमाणुपुञ्जस्योत्पन्नत्वान्न प्रत्यक्षत्वे विरोध इति वाच्यम्। अदृश्यस्य दृश्यानुपादानत्वात्। अन्यथा चक्षुरूष्मादिसन्ततेरपि कदाचिद्दृश्यत्वं स्यात्। न चातितप्ततैलादौ कथमदृश्यदहनसन्ततेर्दृश्यदहनोत्पत्तिरिति वाच्यम्। तत्र तदन्तःपातिभिर्दृश्यैरेव दहनावयवैः स्थूलदहनोत्पत्तेरभ्युपगमात्। न चादृश्यद्व्यणुकेन कथं त्रसरेणोरुत्पत्तिरिति वाच्यम्। यतो न वयं दृश्यत्वमदृश्यत्वं वा कस्य चित् स्वभावादाचक्ष्महे किं तु महत्त्वोद्भूतरूपादिकारणसमुदायवशाद् दृश्यत्वम्, तदभावे चादृश्यत्वम्। तथा च त्रसरेणोर्महत्त्वात् प्रत्यक्षं न तु द्व्यणुकादेस्तदभावात्। न हि त्वन्मतेऽपीदं सम्भवति, परमाणौ महत्त्वाभावात्। इत्थं चावयविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्षत्वादनित्यत्वम्। तेषां चावयवधाराया अनन्तत्वे मेरुसर्षपयोरपि साम्यप्रसङ्गः। अतः क्व चिद्विश्रमो वाच्यः। यत्र च विश्रमस्तस्याऽनित्यत्वे तत्समवेतमात्रकार्य्यानुत्पत्तिप्रसङ्ग इति तस्य नित्यत्वम्। महत्परिमाणतारतम्यस्य

गगनादौ विश्रान्तत्वमिवाणुपरिमाणतारतम्यस्यापि क्व चिद्विश्रान्तत्वमस्तीति तस्य परमाणुत्वसिद्धिः। न च त्रसरेणावेव विश्रमोऽस्त्विति वाच्यम्। त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वाद्घटवदित्यनुमानेन तदवयवसिद्धौ, त्रसरेणोरवयवाः सावयवा महदारम्भकत्वात् कपालवदित्यनुमानेन तदवयवसिद्धेः। न चेदमप्रयोजकम्। अपकृष्टमहत्त्वं प्रत्यनेकद्रव्यवत्त्वस्य प्रयोजकत्वात्। न चैवं क्रमेण तदवयवधारापि सिध्येदिति वाच्यम्। अनवस्थाभयेन तदसिद्धेः।

सा च त्रिधा भवेद्देह-
मिन्द्रियं विषयस्तथा ॥ ३७॥

सा च त्रिधेति। सा कार्य्यरूपा पृथिवी त्रिविधा शरीरेन्द्रियविषयभेदादित्यर्थः।

तत्र देहमुदाहरति। योनिजादीति।

योनिजादि भवेद्देहम्

योनिजमयोनिजं चेत्यर्थः। योनिजमपि जरायुजमण्डजं च। जरायुजं मानुषादीनामण्डजं

दिकम्।

सर्पादीनाम्। अयोनिजं स्वेदजोद्भिज्जादिकम्। स्वेदजाः कृमिदंशाद्याः, उद्भिज्जास्तरुगुल्माद्याः। नारकिणां शरीरमप्ययोनिजम्। न च मानुषादिशरीराणां पार्थिवत्वे किं मानमिति वाच्यम्। गन्धादिमत्त्वस्यैव प्रमाणत्वात्। न च क्लेदोष्मादेरुपलम्भादाप्यत्वादिकमपि स्यादिति वाच्यम्। तथा सति जलत्वपृथिवीत्वादिना सङ्करप्रसङ्गात्। न च तर्हि जलत्वादिकमेवास्तु न तु पार्थिवत्वमिति वाच्यम्। क्लेदादीनां विनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानात्, गन्धाद्युपलब्धेश्च पृथिवीत्वसिद्धेः। तेन पार्थिवादिशरीरे जलादीनां निमित्तत्वमात्रं बोध्यम्। शरीरत्वं न जातिः पृथिवीत्वादिना साङ्कर्य्यात्, किं तु चेष्टाश्रयत्वम्। वृक्षादीनामपि चेष्टासत्त्वान्नाव्याप्तिः न च वृक्षादीनां शरीरत्वे किंमानमिति वाच्यम। आध्यात्मिकवायुसम्बन्धस्य प्रमाणत्वात्। तत्रैव किं मानमिति चेत्, भग्नक्षतसंरोहणादिना तदनुमानात्। यदि हस्तादौ शरीरव्यवहारो न भवति तदाऽन्त्यावयवित्वेन विशेषणीयम्। न च यत्र शरीरे चेष्टा न

जाता तत्राव्याप्तिरिति वाच्यम् । तादृशे प्रमाणा-भावात् । अथ वा चेष्टावदन्त्यावयविमात्रवृ-त्तिद्रव्यत्वव्याप्यजातिमत्त्वं तत्, मानुषत्वचैत्रत्व-जातिमादाय लक्षणसमन्वयः । न च नृसिंहशरीरे कथं लक्षणसमन्वयः, तत्र नृसिंहत्वस्यैकव्यक्तिवृ-त्तितया जातित्वाभावात्, जलीयतैजसशरीरवृ-त्तितया देवत्वस्यापि जातित्वाभावादिति वाच्य-म् । कल्पभेदेन नृसिंहशरीरस्य नानात्वेन नृसिं-हत्वजात्या लक्षणसमन्वयात् ॥

इन्द्रियं घ्राणलक्षणम् ।

इन्द्रियमिति । घ्राणेन्द्रियं पार्थिवमित्यर्थः पार्थिवत्वं कथमिति चेत् । इत्थम् । घ्राणेन्द्रियं पार्थिवं रूपादिषु गन्धस्यैव व्यञ्जकत्वात् कुङ्कुम-गन्धाभिव्यञ्जकघृतवत् । न च दृष्टान्ते स्वकीय-रूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यम् । परकीय-रूपाद्यव्यञ्जकत्वस्य तदर्थत्वात् । न च नवशरा-वगन्धव्यञ्जकजलेनैकान्तिकत्वमिति वाच्यम् । तस्य सक्तुरसाभिव्यञ्जकत्वात् । यद्वा परकीयेति न देयं वायूपनीतसुरभिभागस्य दृष्टान्तत्वसम्भवा

त् । न च घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्रद्व्यणुक-
त्वात्तत्व्यभिचार इति वाच्यम् । द्रव्यत्वे सतीति-
विशेषणात् ॥ ॥

विषयो द्व्यणुकादिश्च
ब्रह्माण्डान्त उदाहृतः ॥ ३८ ॥

विषय इति । उपभोगसाधनं विषयः ।
सर्व्वमेव हि कार्य्यजातमदृष्टाधीनं यत् कार्य्यं यद-
दृष्टाधीनं तत्तदुपभोगं साक्षात् परम्परया वा ज-
नयत्येव । न हि बीजप्रयोजनाभ्यां विना कस्य
चिदुत्पत्तिरस्ति, तेन द्व्यणुकादि ब्रह्माण्डं सर्व्व-
मेव विषयो भवति । शरीरेन्द्रिययोर्विषयत्वेऽपि
प्रकारान्तरोपन्यासः शिष्यबुद्धिवैशद्यार्थः ।

जलं निरूपयति । वर्णः शुक्ल इति ।

वर्णः शुक्लः

स्नेहसमवायिकारणतावच्छेदकतया जल-
त्वं जातिः सिध्यति । यद्यपि स्नेहत्वं नित्यानि-
त्यवृत्तितया न कार्य्यतावच्छेदकम् । तथापि जन्य-
स्नेहत्वं तथा बोध्यम् । अथ परमाणौ जलत्वं न
स्यात् तत्र जन्यस्नेहाभावात्, नितरस्य स्वरूपयो-

ग्यत्वे फलावश्यम्भावनियमादिति चेन्न । जन्य-
स्नेहजनकतावच्छेदकतया जन्यजलत्वजातेः सि-
द्धौ, तदवच्छिन्नजनकतावच्छेदकतया जलत्व-
जातिसिद्धेः । शुक्लरूपवत्त्वमेव दर्शयितुमुक्तं वर्णः
शुक्ल इति, न तु शुक्लरूपवत्त्वं लक्षणम् । अथ-
वा नैमित्तिकद्रवत्ववदवृत्तिरूपवद्वृत्तिद्रव्यत्वसा-
क्षाद्व्याप्यजातिमत्त्वम्, अभास्वरशुक्लेतररूपा-
समानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजा-
तिमत्त्वं वा तदर्थः ।

रसस्पर्शौ जले मधुरशीतलौ ।

रसस्पर्शाविति । जलस्य मधुर एव रसः ।
शीत एव स्पर्शः । तिक्तावृत्तिमधुरवृत्तिद्रव्यत्व-
साक्षाद्व्याप्यजातिमत्त्वं तदर्थः, तेन शर्करादौ
नातिव्याप्तिः । ननु शुक्लरूपवत्त्वमेवेति कुतः, का-
लिन्दीजलादौ नीलोपलब्धेरिति चेन्न । नील-
जनकतावच्छेदिकयाः पृथिवीत्वजातेरभावा-
ज्जले नीलरूपासम्भवात् । कालिन्दीजले नीलत्व-
प्रतीतिस्तदाश्रयौपाधिकी । अत एव वियति वि-
क्षिप्ते धवलिमोपलब्धिः । अथ जले माधुर्यं किं

मानं न हि प्रत्यक्षेण कोऽपि रसस्तत्रानुभूयते, एवेति न च नारिकेलजलादौ माधुर्य्यमुपलभ्यत ज-वाच्यम्, तस्याश्रयोपाधिकत्वात्, अन्यथा जम्बीरजलादावम्लादिरसोपलब्धेरम्लादिमत्त्वमपि-स्यादिति चेन्न। हरीतक्यादिभक्षणस्य जलरस-व्यञ्जकत्वात्। न च हरीतक्यामेव जलोष्मसंयो-गाद्रसान्तरोत्पत्तिरिति वाच्यम्। कल्पनागौरवा-त् पृथिवीत्वस्याम्लादिजनकतावच्छेदकत्वाच्च ज-ले नाम्लादिकम्। जम्बीररसादौ त्वाश्रयोपाधिकी तथाप्रतीतिः। एवं जन्यशीतस्पर्शजनकतावच्छेद-कं जन्यजलत्वम्, तदवच्छिन्नजनकतावच्छेदकं तु जलत्वमिति बोध्यम्। घृष्टचन्दनादौ तु शैत्यो-पलब्धिश्चन्दनान्तर्वर्त्तिशीततरसलिलस्यैव। ते-जःसंयोगाज्जले उष्णप्रतीतिरौपाधिकी स्फुटैव, तत्र पाकासम्भवात्॥ ॥

### स्नेहस्तत्र

स्नेहस्तत्रेति । घृतादावपि तदन्तर्वर्त्तिजल-स्यैव स्नेहो जलस्य स्नेहसमवायिकारणत्वात्। तेन जल एव स्नेह इति मन्तव्यम्।

द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३

द्रवत्वमिति । सांसिद्धिकद्रवत्वत्वं जातिविशेष प्रत्यक्षसिद्धस्तदवच्छिन्नजनकतावच्छेदकमपि त देवेति भावः । तैलादावपि जलस्यैव द्रवत्वम्, स्नेहप्रकर्षेण च दहनानुकूल्यमिति वक्ष्यति ।

नित्यतादि प्रथमवत्

प्रथमवदिति । पृथिव्या इवेत्यर्थः । तथाहि । जलं द्विविधं नित्यमनित्यं च । परमाणुरूप नित्यं द्व्यणुकादिकं सर्व्वमनित्यमवयवसमवेतं च । अनित्यमपि त्रिविधं शरीरेन्द्रियविषयभेदात् ।

पृथिवीतो यो विशेषस्तमाह । किं त्विति ।

किं तु देहमयोनिजम् ।

अयोनिजमिति । अयोनिजमेवेत्यर्थः । जलीयं शरीरमयोनिजं वरुणलोके प्रसिद्धम् ।

इन्द्रियं रसनं

इन्द्रियमिति । रसनं जलीयमित्यर्थः । तथाहि । रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् । सक्तुरसाभिव्यञ्जकोदकवत् । रस

नसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देय-
म्।

विषयं दर्शयति। सिन्धुरिति।

सिन्धुर्हिमादिर्विषयो मतः॥ ४०॥

सिन्धुः समुद्रः। हिमं तुषारः। आदिपदा-
त् सरित्कासारकरकादिः सर्व्वो ग्राह्यः। न च
हिमकरकयोः कठिनत्वात् पार्थिवत्वमिति वा-
च्यम्। ऊष्मणा विलीनस्य तस्य जलत्वस्य प्र-
त्यक्षसिद्धत्वात्। यद्द्रव्यं यद्द्रव्यध्वंसजन्यमि-
ति व्याप्तेर्जलोपादानोपादेयत्वसिद्धेः। अदृष्टवि-
शेषेण द्रवत्वप्रतिरोधात् करकादीनां काठिन्यप्र-
त्ययस्य भ्रान्तित्वात्।

तेजो निरूपयति। स्पर्श उष्ण इत्यादिना।

स्पर्श उष्णस्तेजसस्तु

उष्णत्वं स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसि-
द्धः। इत्थं च जन्योष्णस्पर्शसमवायिकारणतावच्छे-
दकं तेजस्त्वं जातिविशेषः। तस्य परमाणुत्वास्ति-
त्वं तु जलत्वस्येवानुसन्धेयम्। न चोष्णस्पर्श-
वत्त्वं चन्द्रकिरणादावव्याप्तमिति वाच्यम्। तत्र-

त्युष्णस्य सत्त्वात् । किं तु तदन्तःपातिजलस्पर्शेनाभिभवादग्रहः । एवं रत्नकिरणादौ पार्थिवस्पर्शेनाभिभवाच्चक्षुरादौ चानुद्भूतत्वादग्रहः

स्याद्रूपं शुक्लभास्वरम् ।

रूपमित्यादि । वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाभिभवाच्छुक्लत्वाग्रहः । तद्रूपाग्रहे धर्म्मिणोऽपि चाक्षुषत्वं न स्यादिति चेन्न । अन्यदीयरूपेणापि धर्म्मिणो ग्रहसम्भवात्, शङ्खस्येव पित्तपीतिम्ना । वह्नेस्तु शुक्लरूपं नाभिभूतं किं तु तदीयं शुक्लत्वमभिभूतमित्यन्ये ।

नैमित्तिकं द्रवत्वं तु

नैमित्तिकमिति । सुवर्णादिरूपे तेजसि तत्सत्त्वात् । न च नैमित्तिकद्रवत्वं न लक्षणं दहनादावव्याप्तेर्घृतादावतिव्याप्तेश्चेति वाच्यम् । पृथिव्यवृत्तिनैमित्तिकद्रवत्ववद्वृत्तिजातिमत्त्वस्य विवक्षितत्वात् ।

नित्यतादि च पूर्ववत् ॥ ४१ ॥

पूर्ववदिति । जलस्येवेत्यर्थः । तथाहि । तत्तु द्विविधं नित्यमनित्यं च । नित्यं परमाणुरूपं

तदन्यदनित्यम् अवयवि च। तच्च त्रिधा शरीरेन्द्रियविषयभेदात्। शरीरमयोनिजमेव तच्च सूर्य्यलोकादौ प्रसिद्धम्।

अत्र यो विशेषस्तमाह : इन्द्रियमिति।

इन्द्रियं नयनम्

चक्षुस्तैजसं परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत्। प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादाद्यं परकीयेति, घटादेः स्वीयरूपव्यञ्जकत्वाद्व्यभिचारवारणाय द्वितीयं परकीयेति। अथ वा प्रभाया दृष्टान्तत्वसम्भवादाद्यं परकीयेति न देयम्। चक्षुःसन्निकर्षे व्यभिचारवारणाय द्रवत्वं देयम्

विषयं दर्शयति। वह्नीति।

वह्निस्वर्णादिर्विषयो मतः।

ननु सुवर्णस्य तैजसत्वे किं मानमिति चेन्न। सुवर्णं तैजसम् असति प्रतिबन्धकेऽत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्वात्, यन्नैवं तन्नैवं यथा पृथिवीति। न चाप्रयोजकं पृथिवीद्रवत्वस्य जन्यजलद्रवत्वस्य चाग्निसंयोगनाश्यत्वात्।

ननु पीतिमगुरुत्वाश्रयस्य पार्थिवभागस्यापि त-
दानीं द्रुतत्वात्तेन व्यभिचार इति चेन्न । जलम-
ध्यस्थमसीक्षोदकवत् तस्यांद्रवत्वात् । अपरे
पीतिमाश्रयस्यात्यन्ताग्निसंयोगेऽपि रूपापरावृ-
त्तिदर्शनात् तत्प्रतिबन्धकं विजातीयं द्रवद्रव्यं क-
ल्प्यते । तथा हि । अग्निसंयोगे पीतिमगुरुत्वाश्र-
यो विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः, अ-
त्यन्ताग्निसंयोगेऽपि पूर्व्वरूपविजातीयरूपानधि-
करणपार्थिवत्वात् जलमध्यस्थपीतपटवत्, त-
स्य च पृथिवीजलभिन्नस्य तेजस्त्वनियमात्

वायुं निरूपयति । अपाकज इति ॥

अपाकजोऽनुष्णाशीतः
स्पर्शस्तु पवने मतः ॥ ४२ ॥
तिर्य्यग्गमनवानेष
ज्ञेयः स्पर्शादिलिङ्गकः ।

अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्त्वा-
दुक्तमपाकज इति । अपाकजस्पर्शस्य जलादावपि
सत्त्वादुक्तमनुष्णाशीतेति । तेन वायवीयो विजा-
तीयः स्पर्शो दर्शितः । तज्जनकतावच्छेदकं वायु-

स्वमिति भावः । एष वायुः स्पर्शादिलिङ्गकः । वायुर्हि स्पर्शशब्दधृतिकम्पैरनुमीयते, विजातीयस्पर्शेन विलक्षणशब्देन तृणादीनां धृत्या शाखादीनां कम्पेन च वायोरनुमानात् । यथा च वायोर्न प्रत्यक्षं तथाग्रे वक्ष्यते ।

पूर्व्ववन्नित्यतादिकमुक्तम्

पूर्व्ववदिति । वायुर्द्विविधः, नित्योऽनित्यश्च, परमाणुरूपो नित्यस्तदन्योऽनित्यः समवेतश्च, सोऽपि त्रिविधः शरीरेन्द्रियविषयभेदात् । तत्र शरीरमयोनिजं पिशाचादीनाम्, परं तु जलीयतैजसवायवीयशरीराणां पार्थिवभागोपष्टम्भादुपभोगसाधनत्वं जलादीनां प्राधान्याज्जलीयत्वादिकमिति ।

अत्र यो विशेषस्तमाह । देहव्यापीति ।

देहव्यापि त्वगिन्द्रियम् ॥ ४३ ॥

शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वक् । तच्च वायवीयं रूपादिषु स्पर्शस्यैव व्यञ्जकत्वादङ्गसङ्गिसलिलशैत्यव्यञ्जकव्यजनवातवत् ।

विषयं दर्शयति । प्राणादिरिति ।

प्राणादिस्तु महावायु-
पर्य्यन्तो विषयो मतः ।

यद्यप्यनित्यो वायुश्चतुर्विधस्तस्य चतुर्थो
विधा तु प्राणादिरित्युक्तमाकरे। तथापि संक्षेपा-
दत्र त्रैविध्यमुक्तम् । प्राणस्त्वेक एव हृदादि
नानास्थानवशान्मुखनिर्गमादिनानाक्रियावशा-
च्च नानासंज्ञा लभत इति ।

आकाशं निरूपयति । आकाशस्येति ।

आकाशस्य तु विज्ञेयः
शब्दो वैशेषिको गुणः ॥ ४४ ॥

आकाशकालदिशामेकैकव्यक्तित्वादाकाश-
त्वादिकं न जातिः किं त्वाकाशत्वं शब्दाश्रय-
त्वम् । वैशेषिक इति कथनं तु विशेषगुणा-
न्तरव्यवच्छेदाय । एतेन प्रमाणमपि दर्शितम्।
तथाहि । शब्दो विशेषगुणश्चक्षुर्ग्रहणायोग्य-
बहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवत्, शब्दे
द्रव्यसमवेतो गुणत्वात् संयोगवत्, इत्यनुमानेन
शब्दस्य द्रव्यसमवेतत्वे सिद्धे, शब्दो न स्पर्शव-
द्विशेषगुणोऽग्निसंयोगासमवायिकारणकत्वाभा-

सत्यकारणगुणपूर्व्वकप्रत्यक्षत्वात् सुखवत् । पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम् । पटरूपादौ व्यभिचारवारणायाकारणगुणपूर्वकेति । जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति । शब्दो न दिक्कालमनोगुणो विशेषगुणत्वात् । नात्मविशेषगुणो बहिरिन्द्रियग्राह्यत्वाद्रूपवत् । इत्थं च शब्दाधिकरणं नवमद्रव्यं गगननामकं सिध्यतीति । न च वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्व्वकः शब्द उत्पद्यतामिति वाच्यम् । अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावात् ।

तत्र शरीरस्य विषयस्य चाभावादिन्द्रियं दर्शयति । इन्द्रियमिति ।

इन्द्रियं तु भवेच्छ्रोत्रम्

नन्वाकाशं लाघवादेकं सिद्धं श्रोत्रं तु पुरुषभेदेन भिन्नं तत् कथमाकाशं स्यादत आह । एकः सन्नपीत्यादि ।

एकः सन्नप्युपाधितः ।

आकाश एक एव सन्नप्युपाधेः कर्णशष्कु-

स्यादेर्भेदाद् भिन्नं श्रोत्रात्मकं भवतीत्यर्थः।

कालं निरूपयति। जन्यानामिति।

जन्यानां जनकः कालः

तत्र प्रमाणं दर्शयितुमाह। जगतामिति।

जगतामाश्रयो मतः ॥ ४५ ॥

तथाहि। इदानीं घट इत्यादिप्रतीतिः सूर्य-
परिस्पन्दादिकं यदि विषयीकरोति तदा सूर्य-
परिस्पन्दादिना घटादेः सम्बन्धो वाच्यः। स च
संयोगादिर्न सम्भवतीति काल एव तत्सम्बन्ध-
घटकः कल्प्यते। इत्थं च तस्याश्रयत्वमपि स-
म्यक्।

प्रमाणान्तरं दर्शयति। परापरत्वेति।

परापरत्वधीहेतुः

परत्वापरत्वबुद्धेरसाधारणं निमित्तं काल
एव। परत्वापरत्वयोरसमवायिकारणसंयोगा-
श्रयो लाघवादतिरिक्तः कल्प्यत इति भावः।

नन्वेकस्य कालस्य सिद्धौ क्षणदिनमासव-
र्षादिसमयभेदो न स्यादत आह। क्षणादिरिति।

क्षणादिः स्यादुपाधितः।

कालस्त्वेकोऽप्युपाधिभेदात् क्षणादिव्यवहा-
रविषयः । उपाधिस्तु स्वजन्यविभागप्रागभा-
वावच्छिन्नं कर्म्म । पूर्व्वसंयोगावच्छिन्नविभा-
गो वा । पूर्व्वसंयोगनाशावच्छिन्न उत्तरसंयोग-
प्रागभावो वा । उत्तरसंयोगावच्छिन्नं कर्म्म वा ।
न चोत्तरसंयोगानन्तरं क्षणव्यवहारो न स्यादि-
ति वाच्यम् । कर्म्मान्तरसत्त्वादिति । महाप्रलये
क्षणादिव्यवहारो यद्यस्ति । तदाऽनायत्या ध्वंसे-
नोपपादनीयः । दिनादिव्यवहारस्तु तत्तत्क्षण-
कूटैरेवेति ।

दिशं निरूपयति । दूरान्तिकेति ।

दूरान्तिकादिधीहेतु-
रेका नित्या दिगुच्यते ॥ ४६ ॥

दूरत्वमन्तिकत्वं च दैशिकं परत्वमपरत्वं बो-
ध्यम् । तद्बुद्धेरसाधारणं बीजं दिगेव । दैशिकप-
रत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया
दिक् सिध्यतीति भावः ।

नन्वेकैव दिग् यदि तदा प्राचीप्रतीच्यादि-
व्यवहारः कथमुपपद्यतामित्यत आह । उपा-

धीति ।

उपाधिभेदादेकाऽपि
प्राच्यादिव्यपदेशभाक् ।

यत्पुरुषस्योदयगिरिसन्निहिता या दिक् सा तस्य प्राची । उदयगिरिव्यवहिता च प्रतीची। एवं तत्पुरुषीयसुमेरुसन्निहिता दिगुदीची । तद्व्यवहिता त्ववाची । सर्व्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित इति नियमात् ।

आत्मानं निरूपयति । आत्मेन्द्रियेति ॥

आत्मेन्द्रियाद्यधिष्ठाता

आत्मत्वजातिस्तु सुखदुःखादिसमवायिकारणतावच्छेदकतया सिध्यति। ईश्वरेऽपि सा जातिरस्त्येव, अदृष्टादिरूपकारणाभावात्तु न सुखदुःखाद्युत्पत्तिः, नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भाव इति नियमस्याप्रयोजकत्वात् । परे त्वीश्वरे सा जातिर्नास्त्येव प्रमाणाभावात् । न च दशमद्रव्यत्वापत्तिः । ज्ञानवत्त्वेन विभजनादिति वदन्ति । इन्द्रियादीति । इन्द्रियाणां शरीरस्य च परम्परया चैतन्यसम्पादकः ।

यद्यप्यात्मन्यहं जानेऽहं सुखीत्याद्यादितय-
क्षविषयत्वमस्त्येव । तथापि विप्रतिपन्नं प्रति
प्रथमत एव शरीरादिभिन्नस्तत्प्रतीतिगोचर इ-
ति प्रतिपादयितुं न शक्यत इत्यतः प्रमाणं दर्शा-
यति । करणमिति ।

करणं हि सकर्त्तृकम् ॥ ४७ ॥

कुठारादीनां छिदादिकरणानां कर्त्तारमन्तरे-
ण फलानुपधानं दृष्टम् । एवं चक्षुरादीनां ज्ञान-
करणानां फलोपधानमपि कर्त्तारमन्तरेण नोप-
पद्यत इत्यतिरिक्तः कर्त्ता कल्प्यते ।

ननु शरीरस्यैव कर्त्तृत्वमस्त्वत आह । शरी-
रस्येति ।

शरीरस्य न चैतन्यं
मृतेषु व्यभिचारतः ।

ननु चैतन्यं ज्ञानादिकमेव मुक्तात्मनां त्व-
न्मत इव मृतशरीराणामपि तदभावे का क्षतिः
प्राणाभावेन ज्ञानाभावस्य सिद्धेरिति चेन्न । श-
रीरस्य चैतन्ये बाल्ये विलोकितस्य स्थाविरे स्म-
रणानुपपत्तेः । शरीराणामवयवोपचयापचयैरु-

त्वादविनाशशालित्वात् । न च पूर्व्वशरीरोत्पन्न-संस्कारेण द्वितीयशरीरे संस्कार उत्पद्यत इति वाच्यम् । अनन्तसंस्कारकल्पने गौरवात् । एवं शरीरस्य चैतन्ये बालकस्य स्तनपानादौ प्रवृत्ति-र्न स्यात् । इष्टसाधनताज्ञानस्य तद्धेतुत्वात्तदा-नीमिष्टसाधनतास्मारकाभावात् । मन्मते जन्मा-न्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्र-वृत्तिः । न च जन्मान्तरानुभूतमन्यदपि स्मर्य्य-तामिति वाच्यम् । उद्बोधकाभावात् । अत्र स्त-नायत्यां जीवनादृष्टमेवोद्बोधकं कल्प्यते । इत्थं च संसारस्यानादितयाऽऽत्मनोऽप्यनादित्वसिद्धा-वनादिभावस्य नाशासम्भवाद्द नित्यत्वं सिध्य-तीति बोध्यम् ।

ननु चक्षुरादीनां ज्ञानादौ करणत्वं कर्तृत्वं चास्तु विरोधे साधकाभावादत आह । तथात्व-मिति ।

तथात्वं चेदिन्द्रियाणा-

मुपघाते कथं स्मृतिः ॥ ४८ ॥

तथात्वं चैतन्यमित्यर्थः । उपघाते नाशे सति । अ-

र्थाच्चक्षुरादीनामेव । कथमिति । पूर्वं चक्षुषा सा-
क्षात्कृतानां चक्षुषोऽभावे स्मरणं न स्यात् । अनु-
भवितुरभावात् । अन्यदृष्टस्यान्येन स्मरणासम्भ-
वात् । अनुभवस्मरणयोः सामानाधिकरण्येन
कार्य्यकारणभावादिति भावः ।

ननु चक्षुरादीनां चैतन्यं मास्तु मनसस्तु नि-
त्यस्य चैतन्यं स्यादत आह । मनोऽपीति ।

मनोऽपि न तथा ज्ञाना-
द्यनध्यक्षं तदा भवेत् ।

न तथा न चेतनम् । ज्ञानादीति । मनसोऽणु-
त्वात् प्रत्यक्षे च महत्त्वस्य हेतुत्वान्मनसि ज्ञा-
नसुखादिसत्त्वे तत्प्रत्यक्षानुपपत्तिरित्यर्थः । यथा
मनसोऽणुत्वं तथा वक्ष्यते ।

नन्वस्तु विज्ञानमेवात्मा, तस्य स्वतःप्रका-
शरूपत्वाच्चेतनत्वम्, ज्ञानसुखादिकं तु तस्यैवा-
कारविशेषः, तस्यापि भावत्वादेव क्षणिकत्वम्,
पूर्व्वपूर्व्वविज्ञानस्योत्तरोत्तरविज्ञाने हेतुत्वात् सु-
षुप्तावप्यालयविज्ञानधारा निराबाधैव, मृग-
मदवासनावासितवसन इव पूर्व्वपूर्व्वविज्ञानज-

नितसंस्काराणामुत्तरोत्तरविज्ञाने संक्रान्तत्वा-
न्नानुपपत्तिः स्मरणादेरिति चेन्न । तस्य जगद्वि-
षयकत्वे सर्व्वज्ञत्वापत्तेः । यत्किञ्चिद्विषयत्वे वि-
निगमनाभावात् । सुषुप्तावपि विषयावभास-
प्रसङ्गाच्च । तदानीं निराकारा चित्सन्ततिरनुव-
र्त्तत इति चेन्न । तस्याः स्वप्रकाशत्वे प्रमाणाभा-
वात् । अन्यथा घटादीनामपि ज्ञानत्वापत्तिः ।
न चेष्टापत्तिः, विज्ञानव्यतिरिक्तवस्तुनोऽभावा-
दिति वाच्यम् । घटादेरनुभूयमानस्यापलपितुम-
शक्यत्वात् । आकारविशेष एवायं विज्ञानस्येति
चेत् । किमयमाकारोऽतिरिच्यते विज्ञानात्तर्हि स-
मायातं विज्ञानव्यतिरिक्तेन । नातिरिच्यते चेत्त-
र्हि समूहालम्बने नीलाकारोऽपि पीताकारः स्या-
त्, स्वरूपतो विज्ञानस्याविशेषात् । अपोहरूपो
नीलत्वादिर्व्विज्ञानधर्म्म इति चेन्न । नीलत्वादी-
नां विरुद्धानामेकस्मिन्नसमावेशात् । इतरथा वि-
रोधस्यैव दुरुपपन्नत्वात् । न वा वासनासंक्रमः
संभवति । मातृपुत्रयोरपि वासनासंक्रमप्रसङ्गा-
त् । न चोपादानोपादेयभावो नियामक इति

वाच्यम् । वासनायाः संक्रमासंभवात् । उत्तर-
स्मिन्नुत्पत्तिरेव संक्रम इति चेन्न । तदुत्पादका-
भावात् । उत्तरविज्ञानस्यैवोत्पादकत्वे तदान-
न्त्यप्रसङ्गः । क्षणिकविज्ञानेऽतिशयविशेषः क-
ल्प्यत इति चेन्न । मानाभावात् कल्पनागौरवा-
च्च । एतेन क्षणिकशरीरेष्वेव चैतन्यमपि प्रत्यु-
क्तम् । गौरवादतिशये मानाभावाच्च । वीजादा-
वपि सहकारिसमवधानासमवधानाभ्यामेवोप-
पत्तेः कुर्व्वद्रूपत्वाकल्पनाच्च ।

अस्तु तर्हि क्षणिकविज्ञाने गौरवान्नित्यवि-
ज्ञानमेवात्मा, अविनाशी वा अरे अयमात्मा
सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतेश्चेति चेन्न । त-
स्य सविषयत्वासम्भवस्य दर्शितत्वात् । निर्व्वि-
षयस्य ज्ञानत्वे मानाभावात्, सविषयत्वस्या-
प्यननुभवात् । अतो ज्ञानभिन्नो नित्य आत्मेति सि-
द्धम् । सत्यं ज्ञानमिति हि ब्रह्मपरं जीवेषु नोप-
युज्यते । ज्ञानाज्ञानसुखित्वदुःखित्वादिभिर्जीवा-
नां भेदसिद्धौ सुतरामीश्वरभेदोऽन्यथा बन्धमोक्ष-
व्यवस्थानुपपत्तिः । योऽपीश्वराभेदबोधको वेदः

सोऽपि तदभेदेन तदीयत्वं प्रतिपादयन् स्तौति। अभेदभावने च यतितव्यमिति वदति। अत एव सर्वे एवात्मनि समर्पिता इति श्रूयते। मोक्षदशायामज्ञाननिवृत्तावभेदो जायत इत्यपि न। भेदस्य नित्यत्वेन नाशायोगात्। भेदनाशेऽपि व्यक्तिद्वयं स्थास्यत्येव। न च द्वित्वमपि नश्यतीति वाच्यम्। तत्र निर्द्धर्म्मके ब्रह्मणि सत्यत्वाभावेऽपि सत्यस्वरूपं तदितिवद्द्वित्वाभावेऽपि द्वयात्मकौ ताविति सुवचत्वात्। मिथ्यात्वाभावोऽधिकरणात्मकस्तत्र सत्यत्वमिति चेत्। एकत्वाभावो व्यक्तिद्वयात्मको द्वित्वमप्युच्यताम्। प्रत्येकमेकत्वेऽपि पृथिवीजलयोर्न गन्ध इतिवदुभयं नैकमित्यस्य सर्व्वजनसिद्धत्वात्। योऽपि तदानीमभेदप्रतिपादक आगमः सोऽपि निर्दुःखत्वादिना साम्यं प्रतिपादयति, संपदाधिक्ये पुरोहितोऽयं राजा संवृत्त इतिवत्। अत एव "निरञ्जनः परमं साम्यमुपैति" इति श्रूयते। ईश्वरोऽपि न ज्ञानसुखात्मा किं तु ज्ञानाद्याश्रयः। "नित्यं विज्ञानमानन्दं ब्रह्म" इत्यादौ विज्ञान-

पदेन ज्ञानाश्रय एवोक्तः, "यः सर्व्वज्ञ" इत्या-
दिनानुरोधात् । आनन्दमित्यस्याप्यानन्दवदि-
त्यर्थः, अर्शआदित्वान्मत्वर्थीयाच्प्रत्ययात् ।
अन्यथा पुंलिङ्गत्वापत्तेः । आनन्दोऽपि दुःखा-
भाव उपचर्य्यते भारापगमे सुखी संवृत्तोऽह-
मितिवद् दुःखाभावेन सुखित्वप्रत्ययात् । अस्तु
वा तस्मिन्नानन्दो न त्वसावानन्दोऽसुखमिति
श्रुतेः । न विद्यते सुखं यस्येति कुतो नार्थ इति
चेन्न । क्लिष्टकल्पनापत्तेः, प्रकरणविरोधादान-
न्दमित्यत्र मत्वर्थीयप्रत्ययविरोधात् "आनन्दं
ब्रह्मणो विद्वान्न बिभेति कदा चने" त्यत्र भे-
दस्य स्पष्टत्वाच्चेति संक्षेपः ।

एतेन प्रकृतिः कर्त्री, पुरुषस्तु पुष्करपलाश-
वन्निर्लेपः किं तु चेतनः, कार्य्यकारणयोरभे-
दात् कार्य्यनाशे कार्य्यरूपतया नाशः स्यादित्य-
कारणत्वं तस्य । बुद्धिगतचैतन्याभिमानान्यथा-
नुपपत्त्या तत्कल्पनम् । बुद्धिश्च प्रकृतेः परिणामः
सैव महत्तत्त्वमन्तःकरणमित्युच्यते । तत्सत्त्वा-
सत्त्वाभ्यां पुरुषस्य संसारापवर्गौ । तस्या एवे-

न्द्रियप्रणालिकया परिणतिर्ज्ञानरूपा घटादिना सम्बन्धः । पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहात् । ममेदं कर्त्तव्यमिति मदंशः पुरुषोपरागो बुद्धेः स्वच्छतया चेतनप्रतिविम्बादतात्त्विको दर्पणस्येव मुखोपरागः । इदमिति विषयोपराग इन्द्रियप्रणालिकया परिणतिभेदस्तात्त्विको निश्वासाभिहतदर्पणस्येव मलिनिमा । कर्त्तव्यमिति वयापारावेशः । तेनांशत्रयवती बुद्धिस्तत्परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्धो दर्पणमलिनिम्नेव मुखस्योपलब्धिरुच्यते । ज्ञानवत् सुखदुःखेच्छाद्वेषप्रयत्नधर्म्माधर्म्मा अपि बुद्धेरेव कृतिसामानाधिकरण्येन प्रतीतेः । न च बुद्धिश्चेतना परिणामित्वादिति मतमपास्तम् । कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेस्तद्भिन्ने मानाभावाच्च । चेतनोऽहं करोमीति प्रतीतिश्चैतन्यांशे भ्रम इति चेत् । कृत्यंशे किं नेष्यते । अन्यथा बुद्धेर्नित्यत्वे मोक्षाभावोऽनित्यत्वे तत्पूर्व्वमसंसारापत्तिः । नन्वचेतनायाः प्रकृतेः का-

स्यंतस्माद् बुद्धेश्चैतन्यं कार्य्यकारणयोस्तादात्म्यादिति चेन्न । असिद्धेः । कर्त्तुर्जन्यत्वेमानाभावाद् वीतरागजन्मादर्शनादनादित्वम् । अनादेर्नाशासम्भवान्नित्यत्वम् । तत् किं प्रकृत्यादिकल्पनेन । न च "प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः । अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते" इत्यनेन विरोध इति वाच्यम् । प्रकृतेरदृष्टस्य गुणैरदृष्टजन्यैरिच्छादिभिः कर्त्ताहं कर्त्ताहमेवेत्यस्य तदर्थत्वात् । "तत्रैवं सति कर्त्तारमात्मानं केवलं तु यः" इत्यादि वदता भगवता प्रकटीकृतोऽयमुपरिष्टादाशय इति संक्षेपः ।

धर्माधर्माश्रयोऽध्यक्षः

धर्म्माधर्म्माश्रय इति । आत्मेत्यनुषज्यते शरीरस्य तदाश्रयत्वे देहान्तरकृतकर्म्मणां देहान्तरेण भोगानुपपत्तिः ।

विशेषगुणयोगतः ॥ ४९ ॥

विशेषगुणयोगत इति । योग्यविशेषगुणसम्बन्धेनात्मनः प्रत्यक्षं भवति न त्वन्यथा ।

अहं जानेऽहङ्करोमीत्यादिप्रतीतेः ।

प्रवृत्त्याद्यनुमेयोऽयम्

प्रवृत्तीति । अयमात्मा परदेहादौ प्रवृत्त्यादिनानुमीयते । प्रवृत्तिरत्र चेष्टा ज्ञानेच्छाप्रयत्नादीनां देहेऽभावस्योक्तप्रायत्वात् । चेष्टायाश्च यत्नसाध्यत्वाच्चेष्टया प्रयत्नवानात्माऽप्यनुमीयत इति भावः ।

तत्र दृष्टान्तमाह । रथेति ।

रथगत्येव सारथिः ।

यद्यपि रथकर्म्म चेष्टा न भवति । तथापि तेन कर्म्मणा सारथिर्यथाऽनुमीयते तथा चेष्टात्मकेन कर्म्मणा परात्मापीति भावः ।

अहङ्कारस्याश्रयोऽयं

अहङ्कारस्येति । अहङ्कारोऽहमिति प्रत्ययस्तस्याश्रयो विषय आत्मा न शरीरादिरिति।

मनोमात्रस्य गोचरः ॥ ५० ॥

मन इति । मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयो मानसप्रत्यक्षविषयश्चेत्यर्थः । रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात् ।

विभुर्बुद्ध्यादिगुणवान्

विभुरिति । विभुत्वं परममहत्परिमाणवत्त्वं तच्च पूर्व्वमुक्तमपि सपष्टार्थमुक्तम् । बुद्ध्यादीति । बुद्धिसुखदुःखेच्छादयश्चतुर्दश गुणाः पूर्व्वमुक्ता वेदितव्याः ।

अत्रैव प्रसङ्गाद् बुद्धेः कतिपयं प्रपञ्चं दर्शयति । बुद्धिरित्यति ।

बुद्धिस्तु द्विविधा मता ।

द्वैविध्यं व्युत्पादयति । अनुभूतिरिति ।

अनुभूतिः स्मृतिश्च स्या-

दनुभूतिश्चतुर्व्विधा ॥ ५१ ॥

अनुभूतिश्चतुर्विधेति । एतासां चतसृणां करणानि "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी"ति सूत्रोक्तानि वेदितव्यानि ।

प्रत्यक्षमप्यनुमिति-

स्तथोपमितिशब्दजे ।

प्रत्यक्षमिति । इन्द्रियजन्यं ज्ञानं प्रत्यक्षम् । यद्यपि मनोरूपेन्द्रियजन्यं सर्व्वमेव ज्ञानम् । तथापीन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र

ज्ञाने कारणत्वं तत्प्रत्यक्षमिति विवक्षितम्। ई-श्वरप्रत्यक्षं तु न लक्ष्यम्। "इन्द्रियार्थसन्निक-र्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसा-यात्मकं प्रत्यक्ष"मिति सूत्रे तथैवोक्तत्वात्। अ-थ वा ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्। इदं लक्ष-णमीश्वरप्रत्यक्षसाधारणमित्यनुमितौ व्याप्ति-ज्ञानस्योपमितौ सादृश्यज्ञानस्य शाब्दबोधे पद-ज्ञानस्य स्मरणेऽनुभवस्य च हेतुत्वान्न तत्रतत्रा-तिव्याप्तिः। परामर्शजन्यं ज्ञानमनुमितिः। यद्यपि परामर्शप्रत्यक्षादिकं परामर्शजन्यं तथापि हेत्व-विषयकं यज् ज्ञानं तदेवानुमितिः। न च कादाचि-त्कहेतुविषयकानुमितावव्याप्तिरिति वाच्यम्। तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्य वि-वक्षितत्वात्। अथ वा व्याप्तिज्ञानकरणकं ज्ञान-मनुमितिः। एवं सादृश्यज्ञानकरणकं ज्ञानमुप-मितिः। पदज्ञानकरणकं ज्ञानं शाब्दबोधः। व-स्तुतो यां कां चिदनुमितिव्यक्तिमादाय तद्व्यक्ति-वृत्तित्वे सति यां कां चित् प्रत्यक्षव्यक्तिमादाय त-दवृत्तिजातिमत्त्वमनुमितित्वम्। एवं यत्किञ्चित्प्र-

तत्पक्षादिकमादाय तद्व्यक्तिवृत्तित्वे सति यां कांचिदनुमितिव्यक्तिमादाय तदवृत्तिजातिमत्त्वं प्रत्यक्षत्वादिकं वाच्यमिति ।

घ्राणजादिप्रभेदेन

प्रत्यक्षं षड्विधं मतम् ॥ ५२ ॥

घ्राणजादीति । घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रौत्रं मानसमिति षड्विधं प्रत्यक्षम् । न चेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वम् । जन्यप्रत्यक्षस्यैव निरूपणीयत्वात्, उक्तसूत्रानुसारात् ।

घ्राणस्य गोचरो गन्धः

गोचर इति । ग्राह्य इत्यर्थः ।

गन्धत्वादिरपि स्मृतः ।

गन्धत्वादिरिति । आदिपदात् सुरभित्वासुरभित्वपरिग्रहः । गन्धस्य प्रत्यक्षत्वात्तद्वृत्तिजातेरपि प्रत्यक्षम् । गन्धाश्रयग्रहणे तु घ्राणस्य न सामर्थ्यमिति बोध्यम् ।

तथा रसो रसज्ञाया-

स्तथा शब्दोऽपि च श्रुतेः ॥ ५३ ॥

तथा रस इति । रसत्वादिसहित इत्यर्थः । ग-

न्धो रसश्चोद्भूतो बोध्यः। तथा शब्दत्वादिसहितः।

उद्भूतरूपं नयनस्य गोचरो
द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये ।
विभागसंयोगपरापरत्व-
स्नेहद्रवत्वं परिमाणयुक्तम् ॥ ५४॥

उद्भूतरूपमिति। ग्रीष्मोष्मादावनुद्भूतं रूपमिति न चाक्षुषं प्रत्यक्षम्। तद्वन्ति उद्भूतरूपवन्ति ।

क्रियां जातिं योग्यवृत्तिं
समवायं च तादृशम् ।

योग्येति । पृथक्त्वादिकमपि योग्यवृत्तितया ग्राह्यम् । तादृशं योग्यवृत्तिमित्यर्थः ।

चक्षुर्योग्यत्वमेव कथं तदाह। गृह्णातीति।

गृह्णाति चक्षुः संबन्धा-
दालोकोद्भूतरूपयोः ॥ ५५॥

आलोकसंयोग उद्भूतरूपं च चाक्षुषप्रत्यक्षं प्रति कारणम्। तत्र द्रव्यचाक्षुषं प्रति तयोः समवायसम्बन्धेन कारणत्वं द्रव्यसमवेतप्रत्यक्षं प्रति स्वाश्रयसमवायसम्बन्धेन द्रव्यसमवेतसमवेतस्य रूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्ब-

न्येनेति

उद्भूतस्पर्शवद् द्रव्यं
गोचरः सोऽपि च त्वचः ।

उद्भूतेति । उद्भूतस्पर्शवद्द्रव्यं त्वचो गोचरः । सोऽप्युद्भूतस्पर्शोऽपि स्पर्शत्वादिसहितः ।

रूपान्यच्चक्षुषो योग्यम्

रूपान्यदिति । रूपभिन्नं रूपत्वादिभिन्नं च चक्षुषो यद् योग्यं तत् त्वगिन्द्रियस्यापि ग्राह्यम् । तथा च पृथक्त्वसंख्यादयो ये चक्षुर्ग्राह्या गुणा उक्ता एवं क्रियाजातयो योग्यवृत्तयश्च ते त्वचो ग्राह्या इति ।

रूपमत्रापि कारणम् ॥ ५६ ॥

द्रव्याध्यक्षे,

अत्रापि त्वगिन्द्रियजन्येऽपि, रूपं द्रव्यप्रत्यक्षे कारणम् । तथा च बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणमिति । नवीनास्तु बहिर्द्रव्यप्रत्यक्षे रूपं न कारणं प्रमाणाभावात्, किंतु चाक्षुषप्रत्यक्षे रूपं स्पार्शनप्रत्यक्षे स्पर्शः कारणमन्वयव्यतिरेकात् । बहिरिन्द्रियजन्यद्र-

व्यप्रत्यक्षमात्रे किं कारणमिति चेत्, न किंचिदात्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वं वा प्रयोजकमस्तु । रूपस्य कारणत्वे लाघवमिति चेन्न। वायोस्त्वगिन्द्रियेणाग्रहणप्रसङ्गात् । इष्टापत्तिरिति चेत् । स्पर्श एव लाघवात् कारणमस्तु प्रभाया अप्रत्यक्षत्वे त्विष्टापत्तिरित्येव किं न स्यात् । तस्मात् प्रभां पश्यामीतिवद्व वायुं स्पृशामीति प्रत्ययस्य सत्त्वाद्व वायोरपि प्रत्यक्षं भवत्येव, बहिर्द्रव्यप्रत्यक्षमात्रे तु न रूपस्य न वा स्पर्शस्य हेतुत्वम् । वायुप्रभयोरेकत्वं गृह्यत एव, क्वचित् द्वित्वादिकमपि, क्वचित् संख्यापरिमाणाद्यग्रहो दोषादित्याहुः ।

त्वचो योगो मनसा ज्ञानकारणम्।

त्वचो योग इति । त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमित्यर्थः । किं तत्र प्रमाणम्, सुषुप्तिकाले त्वचं त्यक्त्वा पुरीततिवर्त्तमानेन मनसा ज्ञानाजननमिति । ननु सुषुप्तिकाले किं ज्ञानं भविष्यत्यनुभवरूपं स्मरणरूपं वा नाद्यः, अनुभवसामग्र्यभावात् । तथाहि । चाक्षुषादिप्रत्यक्षे

चक्षुरादिना सह मनःसंयोगस्य हेतुत्वात् तदभावादेव न चाक्षुषादिप्रत्यक्षम्, ज्ञानादेरभावादेव न मानसप्रत्यक्षम्, ज्ञानाद्यभावेनात्मनोऽपि न प्रत्यक्षम्, एवं व्याप्तिज्ञानाभावान्नानुमितिः, सादृश्यज्ञानाभावाद्‌ नोपमितिः, पदज्ञानाभावाद्‌ न शाब्दबोध इत्यनुभवसामग्र्यभावाद्‌ नानुभवः, उद्बोधकाभावाच्च न स्मरणम्। मैवम्। सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्सम्बन्धेनात्मनश्च प्रत्यक्षप्रसङ्गात्। तदतीन्द्रियत्वे मानाभावात्। सुषुप्तिप्राक्काले निर्व्विकल्पकमेव जायत इत्यत्रापि प्रमाणाभावात्। अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि कारणत्वं तदा रासनचाक्षुषादिप्रत्यक्षकाले स्पार्शनप्रत्यक्षं स्यात्, विषयत्वक्संयोगस्य त्वङ्मनःसंयोगस्य च सत्त्वात्, परस्परप्रतिबन्धाद्देकमपि वा न स्यादिति। अत्र केचित्। पूर्वोक्तयुक्त्या त्वङ्मनोयोगस्य हेतुत्वे सिद्धे चाक्षुषादिसामग्र्याः स्पार्शनादिप्रतिबन्धकत्वमनुभवानुरोधात् कल्प्यत इति। अन्ये तु सुषुप्त्यनुरोधाच्चर्म्ममनःसंयोगस्य ज्ञानहेतुत्वं कल्प्यम्,

चाक्षुषादिप्रत्यक्षकाले च त्वङ्मनःसंयोगाभावान्न स्पार्शनप्रत्यक्षमिति वदन्ति ।

मनोग्राह्यं सुखं दुःख-
मिच्छा द्वेषो मतिः कृतिः ॥ ५७ ॥

मनोग्राह्यमिति । मनोजन्यप्रत्यक्षविषय इत्यर्थः । मतिर्ज्ञानं कृतिः प्रयत्नः । एवं सुखत्वादिकमपि मनोग्राह्यम् । एवमात्मापि मनोग्राह्यः किंतु मनोमात्रस्य गोचर इत्यनेन पूर्व्वमुक्तत्वादत्र नोक्तः ।

ज्ञानं यन्निर्व्विकल्पाख्यं
तदतीन्द्रियमिष्यते ।

ज्ञानं यदिति । चक्षुःसंयोगाद्यनन्तरं घट इत्याकारं घटत्वादिविशिष्टज्ञानं न सम्भवति पूर्व्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात्, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् । तथा च प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाहि ज्ञानं जायते तदेव निर्व्विकल्पकात्मकम् । तच्च न प्रत्यक्षम् । तथाहि । वैशिष्ट्यानवगाहिज्ञानस्य प्रत्यक्षं न भवति घटमहं जानामीति प्रत्यक्षात् । तत्रात्मनि

ज्ञानं प्रकारीभूय भासते, ज्ञाने घटस्तत्र घटत्वम् । यः प्रकारः स एव विशेषणमित्युच्यते, विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते। विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञानकारणम् । निर्व्विकल्पके च घटत्वादिकं न प्रकारस्तेन घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न सम्भवति। घटत्वाद्यप्रकारकं घटादिविशिष्टज्ञानं न सम्भवति, जात्यतिरिक्तपदार्थज्ञानस्य किञ्चिद्धर्म्मप्रकारकत्वनियमात् ।

महत्त्वं षड्विधेहेतुः

महत्त्वमिति । द्रव्यप्रत्यक्षे महत्त्वं समवायसम्बन्धेन कारणम् । द्रव्यसमवेतानां जातिगुणकर्म्मणां प्रत्यक्षे स्वाश्रयसमवायसम्बन्धेन कारणम्। द्रव्यसमवेतसमवेतानां गुणत्वकर्म्मत्वरूपत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेन कारणमिति ।

इन्द्रियं करणं मतम् ॥ ५८ ॥

इन्द्रियमिति। अत्रापि षड्विध इत्यनुषज्य-

ते। इन्द्रियत्वं तु न जातिः पृथिवीत्वादिना साङ्कर्य्यप्रसङ्गात्। किं तु शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम्। आत्मन्यतिव्याप्तिवारणाय सत्यन्तम्, उद्भूतविशेषगुणस्य शब्दस्य श्रोत्रे सत्त्वाच्छब्देतरेति, विशेषगुणस्य रूपादेश्चक्षुषि सत्त्वादुद्भूतेति। उद्भूतत्वं न जातिः शुक्लत्वादिना सङ्करात्। न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम्। उद्भूतरूपवत्त्वादिना चाक्षुषादौ जनकतानुपपत्तेः। किं तु शुक्लत्वादिव्याप्यमनुद्भूतत्वं नाना तदभावकूटश्चोद्भूतत्वम्, तच्च संयोगादावपि। तथा च शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादेरस्त्यतो विशेषेति। कालादिवारणाय विशेष्यदलम्। इन्द्रियावयवविषयसंयोगस्यापि प्राचां मते प्रत्यक्षजनकत्वादिन्द्रियावयववारणाय, कालादौ रूपाभावप्रत्यक्षे सन्निकर्षघटकतया कारणीभूतचक्षुःसंयोगाद्याश्रयस्य कालादेश्च वारणाय मनःपदम्। ज्ञानकारणमित्यपि तद्वारणाय। करणमिति।

असाधारणं कारणं करणम् । असाधारणत्वं व्यापारवत्त्वम् ।

विषयेन्द्रियसम्बन्धो
व्यापारः सोऽपि षड्विधः ।

विषयेन्द्रियेति । व्यापारः सन्निकर्षः ।
षड्विधं संनिकर्षमुदाहरणद्वारा दर्शयति । द्रव्यग्रह इति ।

द्रव्यग्रहस्तु संयोगात्
संयुक्तसमवायतः ॥ ५९ ॥
द्रव्येषु समवेतानां,
तथा तत्समवायतः ।
तत्रापि समवेतानां,
शब्दस्य समवायतः ॥ ६० ॥
तद्वृत्तीनां समवेत-
समवायेन तु ग्रहः ।
प्रत्यक्षं समवायस्य
विशेषणतया भवेत् ॥ ६१ ॥
विशेषणतया तद्व-
दभावानां ग्रहो भवेत् ।

द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यम् । द्रव्यसमवेतप्रत्यक्षमिन्द्रियसंयुक्तसमवायजन्यमेवमग्रेऽपि। वस्तुतस्तु द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः कारणम् । द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः । द्रव्यसमवेतसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवेतसमवायः । एवमन्यत्रापि विशिष्यैव कार्य्यकारणभावः । परं तु परमाणुनीले नीलत्वं पृथिवीपरमाणौ पृथिवीत्वं च चक्षुषा कथं न गृह्यते तत्र परम्परयोद्भूतरूपसम्बन्धस्य महत्त्वसम्बन्धस्य च विद्यमानत्वात् । तथाहि । नीलत्वं जातिरेकैव घटनीले परमाणुनीले च वर्त्तते । तथा च महत्त्वसम्बन्धो घटनीलमादाय वर्त्ततेउद्भूतरूपसम्बन्धस्तूभयमादायैव वर्त्तते । एवं पृथिवीत्वे घटादिकमादाय महत्त्वसम्बन्धो बोध्यः । एवंवायौ तदीयस्पर्शादौ च सत्तायाश्चाक्षुषप्रत्यक्षं स्यात् ।तस्मादुद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुतसमवायस्य द्रव्यसमवेतचाक्षुषप्रत्यक्षे तादृशचक्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसम-

वेतसमवेतचाक्षुषे कारणत्वं वाच्यम् । इत्थं च परमाणुनीलादौ न नीलत्वादिग्रहः, परमाणु-चक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावात् । एवं वाय्वादौ न सत्त्वादिचाक्षुषं तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात् । एवं यत्र घटस्य मध्यावच्छेदेनालोकसंयोगश्चक्षुःसंयोगस्तु बाह्यावच्छेदेन तत्र घटप्रत्यक्षाभावादालोक-संयोगावच्छिन्नत्वं चक्षुःसंयोगे विशेषणं देयम् । एवं द्रव्यस्पार्शनप्रत्यक्षे त्वक्संयोगः कारणम्, द्रव्यसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्त-समवायः, द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायः कारणम् । अत्रापि महत्त्वावच्छिन्नत्वमुद्भूतस्पर्शावच्छिन्नत्वं च पूर्व्व-वदेव बोध्यम् । एवं गन्धप्रत्यक्षे घ्राणसंयुक्त-समवायः । गन्धसमवेतस्य घ्राणजन्यप्रत्यक्षे घ्राणसंयुक्तसमवेतसमवायः कारणम् । एवं रस-प्रत्यक्षे रसनासंयुक्तसमवायः । रससमवेतस्य रासनप्रत्यक्षे रसनासंयुक्तसमवेतसमवायः कारणम् । शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः का-

रणम् । शब्दसमवेतश्रावणप्रत्यक्षे श्रोत्रावच्छिन्न-समवेतसमवायः कारणम् । अत्र सर्वत्र प्रत्यक्षं लौकिकं बोध्यम् । वक्ष्यमाणमलौकिकं प्रत्यक्षमिन्द्रियसंयोगादिकं विनापि भवति । एवमात्मनः प्रत्यक्षे मनःसंयोगः, आत्मसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवायः, आत्मसमवेतसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायः कारणम् । अभावप्रत्यक्षे समवायप्रत्यक्षे चेन्द्रियसम्बद्धविशेषणता हेतुः । वैशेषिकमते तु न समवायः प्रत्यक्षः । अत्र यद्यपि विशेषणता नानाविधा । तथाहि । भूतलादौ घटाभावः संयुक्तविशेषणतया गृह्यते, संख्यादौ रूपाद्यभावः संयुक्तसमवेतविशेषणतया, संख्यात्वादौ रूपाद्यभावः संयुक्तसमवेतसमवेतविशेषणतया, शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया, कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया, एवं कत्वावच्छिन्नाभावे खत्वाभावादिकं विशेषणविशेषणतया, एवं घटाभावादौ पटाद्यभावः संयुक्तविशेषणविशे-

षणतया, एवमन्यदप्यूह्यम् । तथापि विशेषणता-
त्वरूपेणैकैव सा गण्यते अन्यथा षोढा सन्निक-
र्ष इति प्राचां प्रवादो व्याहन्येतेति ।

यदि स्यादुपलभ्येते-
त्येवं यत्र प्रसज्यते ॥ ६२ ॥

यदि स्यादुपलभ्येतेति । अभावप्रत्यक्षे योग्या-
नुपलब्धिः कारणम् । तथाहि । भूतलादौ घटा-
दिज्ञाने जाते घटाभावादिकं न ज्ञायते तेनाभा-
वोपलम्भे प्रतियोग्युपलम्भाभावः कारणम् । त-
त्र योग्यताऽप्यपेक्षिता । सा च प्रतियोगिस-
त्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा । तदर्थश्च
प्रतियोगिनो घटादेः सत्त्वप्रसक्त्या प्रसञ्जित
उपलम्भरूपः प्रतियोगी यस्य स उपलम्भाभा-
वोऽभावप्रत्यक्षे हेतुः । तथाहि । यत्रालोकसं-
योगादिकं वर्त्तते तत्र यद्यत्र घटः स्यात् तर्हि
उपलभ्येतेत्यापादयितुं शक्यते तत्र घटाभावा-
दिप्रत्यक्षं भवति, अन्धकारे तु नापादयितुं श-
क्यत इति न घटाभावादेरन्धकारे चाक्षुषं प्रत्यक्ष-
म्, स्पार्शनप्रत्यक्षं तु भवत्येव, आलोकसंयोगं

विनापि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात् । गुरुत्वादिकं यदयोग्यं तदभावस्तु न प्रत्यक्षस्तत्र गुरुत्वादिप्रत्यक्षस्यापादयितुमशक्यत्वात् । वायौ रूपाभावः, पाषाणे सौरभाभावो, गुडे तिक्ताभावो, वह्नावनुष्णत्वाभावः, श्रोत्रे शब्दाभाव, आत्मनि सुखाभाव एवमादयस्तत्तदिन्द्रियैर्गृह्यन्ते तत्तत्प्रत्यक्षस्यापादयितुं शक्यत्वात् । संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यताऽन्योन्योभावप्रत्यक्षे तदधिकरणयोग्यताऽपेक्षिता, अतः स्तम्भादौ पिशाचादिभेदोऽपि चक्षुषा गृह्यत एव ।

प्रतयक्षं लौकिकालौकिकभेदेन द्विविधं तत्र लौकिकप्रतयक्षे षोढा सन्निकर्षो वर्णितः, अलौकिकसन्निकर्षानिदानीं वदति । अलौकिक इति ।

अलौकिकः सन्निकर्ष-
स्त्रिविधः परिकीर्त्तितः ।

व्यापारः संनिकर्षः ।

सामान्यलक्षणा ज्ञान-
लक्षणा योगजस्तथा ॥ ६३ ॥

सामान्यलक्षणेति । सामान्यं लक्षणं यस्या इत्यर्थः । तत्र लक्षणपदेन यदि स्वरूपमुच्यते तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते । तच्चेन्द्रियसम्बद्धविशेष्यकज्ञाने प्रकारीभूतं बोध्यम् । तथाहि । यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं जातं तत्र ज्ञाने धूमत्वं प्रकारो धूमत्वेन च सन्निकर्षेण धूम इत्येवंरूपं सकलधूमविषयकं ज्ञानं जायते । अत्र यदीन्द्रियसम्बद्धमित्येवोच्यते तदा धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न स्यात्, तत्र धूमत्वेन सहेन्द्रियसम्बन्धाभावात् । मन्मते त्विन्द्रियसम्बद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानं तत्र प्रकारीभूतं धूमत्वं प्रत्यासत्तिः । इन्द्रियसम्बन्धश्च लौकिको ग्राह्यः, इदं च बहिरिन्द्रियस्थले, मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यमात्रं प्रत्यासत्तिः । अतः शब्दादिना यत्किञ्चित् पिशाचाद्युपस्थितौ मानसः सकलपिशाचादिबोध उपपद्यते । परं तु समानानां भावः सामान्यं तच्च क्वचिन्नित्यं धूमत्वादि, क्व

चिन्नानित्यं घटादि, यत्रैको घटः संयोगेन भूतले समवायेन कपाले वा ज्ञातस्तदनन्तरं सर्व्वेषामेव-तद्घटवतां भूतलादीनां कपालादीनां वा ज्ञानं भव-ति। अत्रेदं बोध्यम्। सामान्यं येन सम्बन्धेन ज्ञा-यते तेन सम्बन्धेनाधिकरणानां प्रत्यासत्तिः।

किं तु यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातं तत्र सामान्यलक्षणया सर्व्वेषां तद्घटवतां भानं न स्यात्, सामान्यस्य तदानीमभावात्। किं चेन्द्रियसम्बद्धविशेष्यकं घट इति ज्ञानं यत्र जातं तत्र परदिन इन्द्रियसम्बन्धं विनापि ता-दृशज्ञानप्रकारीभूतसामान्यस्य सत्त्वात् तादृश-ज्ञानं कुतो न जायते, तस्मात् सामान्यज्ञानं प्रत्या-सत्तिर्न तु सामान्यमित्याह। आसत्तिरित्यादि।

आसत्तिराश्रयाणां तु
सामान्यज्ञानमिष्यते।

आसत्तिः प्रत्यासत्तिरित्यर्थः। तथा च सामान्यलक्षणेत्यत्र लक्षणशब्दस्य विषयोऽर्थः। तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थो लभ्यते।

ननु चक्षुःसंयोगादिकं विनापि सामान्यज्ञानं यत्र वर्त्तते तत्र सकलघटादीनां चाक्षुषादिप्रत्यक्षं स्यादत आह । तदिन्द्रियजेति ।

तदिन्द्रियजतद्धर्म्म-

बोधसामग्र्यपेक्ष्यते ॥ ६४ ॥

अस्यार्थः । यदा बहिरिन्द्रियेण सामान्यलक्षणया ज्ञानं जननीयं तदा यत्किञ्चिद्धर्म्मिणि तत्सामान्यस्य तदिन्द्रियजन्यज्ञानसामग्र्यपेक्षिता, सा च सामग्री चक्षुःसंयोगालोकसंयोगादिकम् । तेनान्धकारादौ चक्षुरादिना तादृशं ज्ञानं न जायते ।

ननु ज्ञानलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा सामान्यलक्षणापि ज्ञानरूपा तदा तयोर्भेदो न स्यादत आह । विषयीति ।

विषयी यस्य तस्यैव

व्यापारो ज्ञानलक्षणः ।

सामान्यलक्षणा प्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानं जनयति, ज्ञानलक्षणा प्रत्यासत्तिस्तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिरिति । अत्रा-

यमर्थः । प्रत्यक्षे सन्निकर्षं विना भानं न सम्भवति तथा च सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां च भानं कथं भवेत् तदर्थं सामान्यलक्षणा स्वीक्रियते । न च सकलवह्निधूमभानाभावे का क्षतिरिति वाच्यम् । प्रत्यक्षधूमे वह्निसम्बन्धस्य गृहीतत्वादन्यधूमस्य चानुपस्थितत्वाद् धूमो वह्निव्याप्यो न वेति संशयानुपपत्तेः । मन्मते तु सामान्यलक्षणया सकलधूमोपस्थितौ कालान्तरीयदेशान्तरीयधूमे वह्निव्याप्यत्वसन्देहः संभवति । न च सामान्यलक्षणास्वीकारे प्रमेयत्वेन सकले प्रमेये ज्ञाते सार्व्वज्ञ्यापत्तिरिति वाच्यम् । प्रमेयत्वेन सकले प्रमेये ज्ञातेऽपि विशिष्य सकलपदार्थानामज्ञातत्वेन सार्व्वज्ञ्याभावात् । एवं ज्ञानलक्षणाया अस्वीकारे सुरभि चन्दनमिति ज्ञाने सौरभस्य भानं कथं स्यात् । यद्यपि सामान्यलक्षणयापि सौरभभानं सम्भवति । तथापि सौरभत्वस्य भानं ज्ञानलक्षणया । एवं यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूलीपट-

लस्यानुव्यवसाये भानं ज्ञानलक्षणया ।

योगजो द्विविधः प्रोक्तः

योगज इति । योगाभ्यासजनितो धर्म्म-विशेषः श्रुतिपुराणादिप्रमाणक इत्यर्थः ।

युक्तयुञ्जानभेदतः ॥ ६५ ॥

युक्तेति । युक्तयुञ्जानरूपयोगिद्वैविध्याद्ध धर्म्मस्यापि द्वैविध्यमिति भावः ।

युक्तस्य सर्व्वदा भानं
चिन्तासहकृतोऽपरः ।

युक्तस्येति । योगाभ्यासवशीकृतमानसः समाधिसमासादितविविधसिद्धिर्युक्त इत्युच्यते । अयमेव विशिष्टयोगवत्त्वाद्ध वियुक्त इत्यप्युच्यते । सर्व्वदेति । चिन्तासहकारं विनापीत्यर्थः । भानं सर्व्वविषयाणां प्रत्यक्षम् । अपरो युञ्जानो विषयव्यावृत्तमानसः । चिन्ता ध्यानं मनसस्तदेकाग्रीकरणं तत्सहकारात् स्थूलसूक्ष्मव्यवहितविप्रकृष्टानर्थान् प्रत्यक्षीकरोतीत्यर्थः

इति श्रीविश्वनाथपञ्चाननभट्टाचार्य्यविरचितायां
सिद्धान्तमुक्तावल्यां प्रत्यक्षखण्डम् ॥

अनुमिति व्युत्पादयति । व्यापारस्त्विति ।

व्यापारस्तु परामर्शः
करणं व्याप्तिधीर्भवेत् ॥ ६६ ॥

अनुमायाम्,

अनुमायामनुमितौ व्याप्तिज्ञानं करणं परामर्शो व्यापारः। तथाहि। येन पुरुषेण महानसादौ धूमे वह्नेर्व्याप्तिर्गृहीता पश्चात् स एव पुरुषः क्वचित् पर्व्वतादावविच्छिन्न मूलां धूमलेखां पश्यति तदनन्तरं धूमो वह्निव्याप्य इत्येवंरूप व्याप्तिस्मरणं तस्य भवति, पश्चाच्च वह्निव्याप्यधूमवानयमिति ज्ञानं भवति स एव परामर्श इत्युच्यते। तदनन्तरं पर्व्वतो वह्निमानिति ज्ञानं जायते तदेवानुमितिः ।

अत्र प्राचीना व्याप्यत्वेन ज्ञायमानं धूमादिकं लिङ्गमनुमितिकरणमिति वदन्ति, तद्दूषयति। ज्ञायमानमिति ।

ज्ञायमानं लिङ्गं तु करणं न हि ।

लिङ्गस्यानुमित्यकरणत्वे युक्तिमाह । अनागतादीति ।

अनागतादिलिङ्गेन
न स्यादनुमितिस्तदा ॥ ६७ ॥

यद्यनुमितौ लिङ्गं करणं स्यात् तदाऽनागतेन विनष्टेन वा लिङ्गेनानुमितिर्न स्यात्, अनुमितिकरणस्य लिङ्गस्य तदानीमभावात्।

व्याप्यस्य पक्षवृत्तित्व-
धीः परामर्श उच्यते ।

व्याप्यस्येति। व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहि ज्ञानमनुमितिजनकम्, तच्च व्याप्यः पक्ष इति ज्ञानं पक्षो व्याप्यवानिति ज्ञानं वा, अनुमितिस्तु पक्षे व्याप्य इति ज्ञानात् पक्षे साध्यमित्याकारिका, पक्षो व्याप्यवानिति ज्ञानात् पक्षः साध्यवानित्याकारिका। द्विविधादपि परामर्शात् पक्षः साध्यवानित्येवानुमितिरित्यन्ये। ननु वन्हिव्याप्यधूमवान् पर्व्वत इति ज्ञानं विनाऽपि यत्र पर्व्वतो धूमवानिति प्रत्यक्षं ततो धूमो वन्हिव्याप्य इति स्मरणं भवति तत्र ज्ञानद्वयादेवानुमितिदर्शनाद्व व्याप्तिविशिष्टवैशिष्ट्यावगाहि ज्ञानं सर्व्वत्र न कारणं किं तु व्याप्यतावच्छे-

दकप्रकारकपक्षधर्म्मताज्ञानत्वेनैव कारणत्वमावश्यकत्वात्, विशिष्टवैशिष्ट्यज्ञानकल्पने गौरवाच्चेति चेन्न। व्याप्यतावच्छेदकाज्ञानेऽपि वन्हिव्याप्यवानिति ज्ञानादनुमितुरत्पत्तेर्लाघवाच्च व्याप्तिप्रकारकपक्षधर्म्मताज्ञानत्वेनैव कारणत्वम्। किं च धूमवान् पर्व्वत इति ज्ञानादनुमित्यापत्तिः, व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकपक्षधर्म्मताज्ञानस्य सत्त्वात्। न च गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्म्मताज्ञानस्य हेतुत्वमिति वाच्यम्। चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्म्मताज्ञानादनुमितिः स्यादिति। यदि तु तत्पुरुषीयगृह्यमाणव्याप्यतावच्छेदकप्रकारकं तत्पुरुषीयपक्षधर्म्मताज्ञानं तत्पुरुषीयानुमितौ हेतुरित्युच्यते तदाऽनन्तकार्य्यकारणभावः। मन्मते तु समवायेन व्याप्तिप्रकारकपक्षधर्म्मताज्ञानं समवायेनानुमितिं जनयतीति नानन्तकार्य्यकारणभावः। यदि तु व्याप्तिप्रकारकं ज्ञानं पक्षधर्म्मताज्ञानं च स्वतन्त्रं कारणमित्युच्यते तदा कार्य्यकारणभावद्वयम्, वन्हिव्याप्यो धूमआलो-

कवान् पर्व्वत इति ज्ञानादप्यनुमितिः स्यादिति ।
इत्थं च यत्र ज्ञानद्वयं तत्रापि विशिष्टज्ञानं कल्पनीयं फलमुखगौरवस्यादोषत्वादिति ।

व्याप्यो नाम व्याप्त्याश्रयस्तत्र का व्याप्तिरित्यत आह । व्याप्तिरिति ।

व्याप्तिः साध्यवदन्यस्मि-
न्नसम्बन्ध उदाहृतः ।

साध्यवदन्येति । वह्निमान् धूमादित्यादौ साध्यो वह्निः साध्यवान् महानसादिस्तदन्यो जलह्रदादिस्तदवृत्तित्वं धूमस्येति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ साध्यवदन्यस्मिन्नयःपिण्डादौ वह्निसत्त्वान्नातिव्याप्तिः । अत्र येन सम्बन्धेन साध्यं तेनैव सम्बन्धेन साध्यवान् बोध्यः । अन्यथा समवायसम्बन्धेन वह्निमान् वह्नेरवयवस्तदन्यो महानसादिस्तत्र धूमस्य विद्यमानत्वादव्याप्तिप्रसङ्गात् । साध्यवदन्यश्च साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान् बोध्यः । तेन यत्किञ्चिद्वह्निमान् महानसादिस्तद्भिन्ने पर्व्वतादौ धूमस्य सत्त्वेऽपि न क्षतिः । येन सम्बन्धेन हेतु-

एतेनैव सम्बन्धेन साध्यवदन्यवृत्तित्वं बोध्यम् । तेन साध्यवदन्यस्मिन् धूमावयवे धूमस्य समवायसम्बन्धेन सत्त्वेऽपि न क्षतिः । साध्यवदन्यावृत्तित्वं च साध्यवदन्यवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः । तेन धूमवान् वह्नेरित्यत्र साध्यवदन्यहृदादिवृत्तित्वाभावेऽपि नातिव्याप्तिः । अत्र यद्यपि द्रव्यं गुणकर्म्मान्यत्वविशिष्टसत्त्वादित्यादौ विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्यात् साध्यवदन्यस्मिन् गुणादाववृत्तित्वं नास्ति । तथापि हेतुतावच्छेदकरूपेणावृत्तित्वं वाच्यम् । हेतुतावच्छेदकं तादृशवृत्तितानवच्छेदकमिति फलितोऽर्थः ।

ननु केवलान्वयिनि ज्ञेयत्वादौ साध्ये साध्यवदन्यस्याप्रसिद्धत्वादव्याप्तिः, किं च सत्तावान् जातेरित्यादौ साध्यवदन्यस्मिन् सामान्यादौ हेतुतावच्छेदकसम्बन्धेन समवायेन वृत्तेरप्रसिद्धत्वादव्याप्तिश्चात आह । अथ वेति ।

अथ वा हेतुमन्निष्ठ-
विरहाप्रतियोगिना ॥ ६९ ॥
साध्येन हेतोरैकाधि-

करण्यं व्याप्तिरुच्यते ।

हेतुमति निष्ठा वृत्तिर्यस्य स तथा विरहोऽभावस्तथा च हेत्वधिकरणवृत्तिर्योऽभावस्तदप्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिरुच्यत इत्यर्थः । अत्र यद्यपि वह्निमान् धूमादित्यादौ हेत्वधिकरणपर्व्वतादिवृत्त्यभावप्रतियोगित्वं तत्तद्वह्न्यादेरस्तीत्यव्याप्तिः । न च समानाधिरणवह्निधूमयोरेव व्याप्तिरिति वाच्यम् । तद्वह्नेरप्युभयाभावसत्त्वादेकसत्त्वेऽपि द्वयं नास्तीति प्रतीतेः । गुणवान् द्रव्यत्वादित्यादावव्याप्तिश्च । तथापि प्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरिति वाच्यम् । ननु रूपत्वव्याप्यजातिमत्त्वान् पृथिवीत्वादित्यादौ साध्यतावच्छेदिका रूपत्वव्याप्यजातयस्तासां च शुक्लत्वादिस्वरूपाणां नीलघटादिवृत्त्यभावप्रतियोगितावच्छेदकत्वमस्तीत्यव्याप्तिरिति चेन्न । तत्र परम्परया रूपत्वव्याप्यजातित्वस्यैव साध्यतावच्छेदकत्वात् । न हि तादृशधर्म्मावच्छिन्ना-

भावः क्वापि पृथिव्यामस्ति । रूपत्वव्याप्यजातिमान् नास्तीति बुद्ध्यापत्तेः । एवं दण्डयादौ साध्ये परम्परासम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकं तच्च प्रतियोगितानवच्छेदकमिति । साध्यादिभेदेन व्याप्तेर्भेदात् तादृशस्थले साध्यतावच्छेदकतावच्छेदकं प्रतियोगितावच्छेदकतानवच्छेदकमित्येव लक्षणघटकमित्यपि वदन्ति । हेत्वधिकरणं च हेतुतावच्छेदकविशिष्टाधिकरणं वाच्यम् । तेन द्रव्यं गुणकर्म्मान्यत्वविशिष्टसत्त्वादित्यादौ शुद्धसत्त्वाधिकरणगुणादिनिष्ठाभावप्रतियोगित्वेऽपि द्रव्यत्वस्य नाव्याप्तिः । एवं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं बोध्यम् । तेन समवायेन धूमाधिकरणतदवयवनिष्ठाभावप्रतियोगित्वेऽपि वह्नेर्नाव्याप्तिः । अभावश्च प्रतियोगिव्यधिकरणो बोध्यः । तेन कपिसंयोग्येतद्वृक्षत्वादित्यत्र मूलावच्छेदेनैतद्वृक्षवृत्तिकपिसंयोगाभावप्रतियोगित्वेऽपि कपिसंयोगस्य नाव्याप्तिः । न च प्रतियोगिव्यधिकरणत्वं यदि प्रतियोग्यनधिकरणवृत्तित्वं तदा त-

थैवाव्याप्तिः । प्रतियोगिनः कपिसंयोगस्यान-धिकरणे गुणादौ वर्त्तते योऽभावस्तस्यैव वृक्षेऽपि मूलावच्छेदेन सत्त्वात् । यदि तु प्रतियोग्यधिक-रणावृत्तित्वं तदा संयोगी सत्त्वादित्यादावति-व्याप्तिः । सत्त्वाधिकरणे गुणादौ यः संयोगाभा-वस्तस्य प्रतियोग्यधिकरणद्रव्यवृत्तित्वादिति वा-च्यम् । हेत्वधिकरणे प्रतियोग्यनधिकरणवृत्तित्व-विशिष्टस्य विवक्षितत्वात् । स्वप्रतियोग्यनधि-करणीभूतहेत्वधिकरणवृत्त्यभाव इति निष्कर्षः । प्रतियोग्यनधिकरणं प्रतियोगितावच्छेदकाव-च्छिन्नानधिकरणं बोध्यम् । तेन विशिष्टसत्तावान् जातेरित्यादौ जात्यधिकरणगुणादेर्विशिष्टस-त्त्वाभावप्रतियोगिसत्ताधिकरणत्वेऽपि नक्षतिः । एवं साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधि-करणत्वं बोध्यम् । तेन ज्ञानवान् द्रव्यत्वादित्या-दौ द्रव्यत्वाधिकरणघटादेर्विषयतासम्बन्धेन ज्ञानाधिकरणत्वेऽपि न क्षतिः । इत्थं च वह्निमा-न् धूमादित्यादौ धूमाधिकरणे समवायेन वह्नि-विरहसत्त्वेऽपि न क्षतिः । ननु प्रतियोगिताव-

च्छेदकावच्छिन्नस्य यस्य कस्य चित्, तत्सामान्यस्य वाऽनधिकरणत्वम्, यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नस्य वाऽनधिकरणत्वं विवक्षितम् । आद्ये कपिसंयोग्येतद्वृक्षत्वादित्यादावेवाव्याप्तिः । कपिसंयोगाभावस्य हि प्रतियोगितावच्छेदकावच्छिन्नो वृक्षावृत्तिरपि कपिसंयोगो भवति तदनधिकरणं च वृक्ष इति । द्वितीये प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः । सर्व्वस्यैवाभावस्य पूर्व्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वात् । न च वह्निमान् धूमादित्यादौ घटाभावादेः पूर्व्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं यद्यपि पर्व्वतादेस्तथापि साध्यतावच्छेदकसम्बन्धेन तत्प्रतियोग्यनधिकरणत्वमस्त्येवेति कथमप्रसिद्धिरिति वाच्यम् । घटाभावे यो वन्ह्यभावस्तस्य घटाभावात्मकतया घटाभावस्य वह्निरपि प्रतियोगी तदधिकरणं च पर्व्वतादीति क्रमेण प्रतियोगिव्यधिकरणस्याप्रसिद्धत्वात् । यदि च घटाभावादौ वन्ह्यभावादिर्भिन्न इत्युच्यते ।

तथापि धूमाभाववान् वन्ह्यभावादित्यादावव्याप्तिः। तत्र साध्यतावच्छेदकसम्बन्धः स्वरूपसम्बन्धस्तेन च सम्बन्धेन सर्व्वस्यैवाभावस्य पूर्व्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं हेत्वधिकरणस्येति। तृतीये तु कपिसंयोगाभाववान् आत्मत्वादित्यादावव्याप्तिः। तत्रात्मवृत्तिकपिसंयोगाभावाभावः कपिसंयोगस्तस्य च गुणत्वात् तत्प्रतियोगितावच्छेदकं गुणसामान्याभावत्वमपि तदवच्छिन्नानधिकरणत्वं हेत्वधिकरणस्यात्मन इति। मैवम्। यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात्। ननु कालो घटवान् कालपरिमाणादित्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः, हेत्वधिकरणस्य महाकालस्य जगदाधारतया सर्व्वेषामभावानां साध्यतावच्छेदकसम्बन्धेन कालिकविशेषणतया प्रतियोग्यधिकरणवृत्तित्वात्। अत्र केचित्। महाकालभेदविशिष्टघटाभावस्तु प्रतियोगिव्यधिकरणो महाकालस्य घटाधार-

त्त्रेऽपि महाकालभेदविशिष्टघटानाधारत्वात्, महाकाले महाकालभेदाभावात् । वस्तुतस्तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्म्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्म्मावच्छिन्नस्य तद्धेतुव्यापकत्वं बोध्यम् । व्यापकसामानाधिकरण्यं च व्याप्तिः । यत्सम्बन्धः साध्यतावच्छेदकः सम्बन्धः । यद्धर्म्मः साध्यतावच्छेदको धर्मः । तत्र यदि यद्धर्म्मावच्छिन्नत्वाभावमात्रमुच्यते तदा समवायेन यो वन्ह्यभावस्तस्य प्रतियोगितावच्छेदकसम्बन्धः समवायस्तेन प्रतियोग्यनधिकरणपर्व्वतादिवृत्तिः स एव, तत्प्रतियोगितावच्छेदकं च वह्नित्वमित्यव्याप्तिः स्यात् । यदि च यत्सम्बन्धावच्छिन्नत्वाभावमात्रमुच्यते तदा तादृशस्य संयोगेन घटाभावस्य प्रतियोगितायां संयोगसम्बन्धावच्छिन्नत्वसत्त्वादव्याप्तिः स्यादत उभयमुपात्तम् । इत्थं च कालो घटवान् कालपरिमाणादित्यादौ संयोगसम्बन्धेन यो घटाभावस्तत्प्रति-

योगिनो घटस्यानधिकरणे महाकाले वर्त्तमानः स एव संयोगेन घटाभावस्तस्य प्रतियोगितायां कालिकसम्बन्धावच्छिन्नत्वघटत्वावच्छिन्नत्वोभयाभावसत्त्वान्नाव्याप्तिः । धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय सामान्यपदमुपात्तम् । ननु प्रमेयवह्निमान् धूमादित्यादौ प्रमेयवह्नित्वावच्छिन्नत्वमप्रसिद्धम् । गुरुधर्म्मस्यानवच्छेदकत्वादिति चेन्न । कम्बुग्रीवादिमान्नास्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगितावि‌षयीकरणेन गुरुधर्म्मस्याप्यवच्छेदकत्वस्वीकारादिति संक्षेपः ।

पक्षवृत्तित्वमित्यत्र पक्षत्वं किं तदाह । सिषाधयिषेत्यादि ।

सिषाधयिषया शून्या
सिद्धिर्यत्र न विद्यते ॥ ७० ॥
स पक्षस्तत्र वृत्तित्व-
ज्ञानादनुमितिर्भवेत् ।

सिषाधयिषाविरहविशिष्टायाः सिद्धेरभावः पक्षता, तद्वान् पक्ष इत्यर्थः । सिषाधयिषाभा-

त्वं न पक्षता, विनापि सिषाधयिषां घनगर्जितेन मेघानुमानात् । अत एव साध्यसंदेहोऽपि न पक्षता, विनापि संदेहं तदनुमानात् । सिद्धौ सत्यामपि सिषाधयिषासत्त्वेऽनुमितिर्भवत्येवातः सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणम् । तथा च यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि पक्षता । यत्र च सिषाधयिषास्ति तत्र सिद्धौ सत्यामसत्यामपि पक्षता । यत्र च सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न पक्षता, सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वात् । ननु यत्र परामर्शानन्तरं सिद्धिस्ततः सिषाधयिषा तत्र सिषाधयिषाकाले परामर्शनाशान्नानुमितिः, यत्र सिद्धपरामर्शसिषाधयिषाः क्रमेण भवन्ति तत्र सिषाधयिषाकाले सिद्धेर्नाशात् प्रतिबन्धकाभावादेवानुमितिः, यत्र सिषाधयिषासिद्धिपरामर्शाः सन्ति तत्र परामर्शकाले सिषाधयिषैव नास्ति, एवमन्यत्रापि सिद्धिकाले परामर्शकाले वा न सिषाधयिषा, योग्यविभुविशेषगुणानां यौगपद्यनिषेधात्, तत

कथं सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणमिति चेन्न। यत्र वह्निव्याप्यधूमवान् पर्व्वतो वह्निमानित्यनुमितिः सुखसाधनमिति प्रत्यक्षं स्मरणं वा, ततः सिषाधयिषा तत्र पक्षतासम्पत्तये सिषाधयिषाविरहविशिष्टत्वविशेषणस्यावश्यकत्वात्। अत्रेदं बोध्यम्। यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमितिस्तादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकानुमितौ पक्षता । तेन सिद्धिपरामर्शसत्त्वेऽपि यत् किं चिज् ज्ञानं जायतामितीच्छायामपि नानुमितिः। वह्निव्याप्यधूमवान् पर्व्वतो वह्निमानितिप्रत्यक्षसत्त्वे प्रत्यक्षादिभिन्नं वह्निज्ञानं जायतामितीच्छायां तु भवत्येव। एवं धूमपरामर्शसत्त्व आलोकेन वह्निमनुमिनुयामितीच्छायामपि नानुमितिः । सिषाधयिषाविरहकाले यादृशसिद्धिसत्त्वे नानुमितिस्तादृशी सिद्धिर्विशिष्य तत्तदनुमितिप्रतिबन्धिका वक्तव्या। तेन पर्व्वतस्तेजस्वी पाषाणमयो वह्निमानिति ज्ञानसत्त्वेऽप्यनुमितेर्न विरोधः। परं तु पक्षतावच्छेदकसामानाधि-

करण्येन साध्यसिद्धावपि तदवच्छेदेनानुमिति-दर्शनात् पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन सिद्धिरेव प्रतिबन्धिका, पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रं विरोधि । इदं तु बोध्यम् । अयं पुरुषो न वेति संशयानन्तरं यत्र पुरुषत्वव्याप्यकरादिमानयमिति ज्ञानं तत्रासत्याम-नुमित्सायां पुरुषत्वस्य प्रत्यक्षं भवति न त्व-नुमितिरतोऽनुमित्साविरहविशिष्टसमानविषयक-प्रत्यक्षसामग्री कामिनीजिज्ञासादिवत् स्वात-न्त्र्येण प्रतिबन्धिका । एवं परामर्शानन्तरं वि-नापि प्रत्यक्षेच्छां पक्षादिप्रत्यक्षानुत्पत्तेः प्रत्यक्षे-च्छाविरहविशिष्टानुमितिसामग्री भिन्नविषयक-प्रत्यक्षप्रतिबन्धिकेति ।

प्रसङ्गसङ्गत्या हेत्वाभासान् विभजते । अ-नैकान्त इत्यादि ।

अनैकान्तो विरुद्धश्चा-
प्यसिद्धः प्रतिपक्षितः ॥ ७१ ॥
कालात्ययापदिष्टश्च

हेत्वाभासास्तु पञ्चधा ।

तल्लक्षणं तु यद्विषयकत्वेन ज्ञानस्यानुमिति-विरोधित्वं तत्त्वम् । तथाहि । व्यभिचारादिवि-षयकत्वेन ज्ञानस्यानुमितिविरोधित्वात्ते दो-षाः । यद्विषयकत्वं च यादृशविशिष्टविषयकत्वं बोध्यम् । तेन बाधभ्रमस्यानुमितिविरोधित्वेऽ-पि तत्र पर्व्वतो वह्न्यभाववानिति विशिष्टस्या-प्रसिद्धत्वान्न हेतुदोषः । न च वह्न्यभावव्याप्य-पाषाणमयत्ववान् पर्व्वत इति परामर्शकाले व-ह्निव्याप्यधूमस्याभासत्वं न स्यात्, तत्र व-ह्न्यभावव्याप्यवान् पक्ष इति विशिष्टस्याप्रसि-द्धत्वादिति वाच्यम् । इष्टापत्तेः । अन्यथा बा-धस्याप्यनित्यदोषत्वापत्तिः । तस्मात्तत्र व-ह्न्यभावव्याप्यपाषाणमयत्ववान् इति परामर्श-काले वह्निव्याप्यधूमस्य नाभासत्वं भ्रमादनु-मितिप्रतिबन्धमात्रं हेतुस्तु न दुष्ट इति । इत्थं च साध्याभाववद्वृत्तिहेत्वादिकं दोषः, तद्वत्ता च हेतौ येन केनापि सम्बन्धेनेति नव्याः । परे तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तद्व-

त्वं हेत्वाभासत्वम्, सत्प्रतिपक्षे विरोधिव्याप्त्या-
दिकमेव तथा, तद्वत्त्वं च हेतोर्ज्ञानरूपसम्बन्धेन।
न चैवं वह्निमान् धूमादित्यादौ पक्षे बाधभ्रम-
स्य साध्याभावविषयकत्वेनानुमितिविरोधित्वा-
ज् ज्ञानरूपसम्बन्धेन तद्वत्त्वस्यापि सत्त्वात् सद्धे-
तोरपि बाधितत्वापत्तिरिति वाच्यम्। तत्र ज्ञा-
नस्य सम्बन्धत्वाकल्पनात्। अत्र सत्प्रतिप-
क्षित इति व्यवहारेण तत्कल्पनात् तत्र च बा-
धितव्यवहाराभावादित्याहुः। अनुमितिविरो-
धित्वं चानुमितितत्कारणान्यतरविरोधित्वम्,
तेनैकहेतौ व्यभिचारग्रहे हेत्वन्तरेणानुमित्युत्प-
त्तेस्तदभावाद्यनवगाहित्वाच्च व्यभिचारज्ञान-
स्यानुमितिविरोधित्वाभावेऽपि न क्षतिरिति
संक्षेपः। यादृशपक्षसाध्यहेतौ यावन्तो दोषा-
स्तावदन्यान्यत्वं तत्र हेत्वाभासत्वम्, पञ्चक-
थनं तु तत्सम्भवस्थलाभिप्रायेण। एवं साधार-
ण्याद्यन्यतमत्वमनैकान्तिकत्वम्।

आद्यः साधारणस्तु

स्यादसाधारणकोऽपरः॥ ७३॥

तथैवानुपसंहारी
त्रिधाऽनैकान्तिको भवेत् ।

आद्यः साधारण इत्यादि । साधारणः साध्यवदन्यवृत्तिर्हेतुः, तेन च व्याप्तिग्रहप्रतिबन्धः क्रियते । असाधारणः साध्यासमानाधिकरणो हेतुः, तेन साध्यसामानाधिकरण्यग्रहः प्रतिबध्यते । यथा शब्दो नित्यः शब्दत्वादित्यादावस-साधारण्यं शब्दोऽनित्यः शब्दत्वादित्यादौ तव-साधारण्यभ्रमः । अन्ये तु सपक्षावृत्तिरसाधारणः, सपक्षश्च निश्चितसाध्यवान् । इत्थं च शब्दोऽनित्यः शबदत्वादित्यादौ पक्षे यदा साध्यनिश्चयस्तदा नासाधारण्यं तत्र हेतुनिश्चयादिति वदन्ति । अनुपसंहारी चात्यन्ताभावाप्रतियोगिसाध्यकादिः, तेन च व्यतिरेकव्याप्तिग्रहप्रतिबन्धः क्रियते । विरुद्धस्तु साध्यव्यापकीभूताभावप्रतियोगी, अयं च साध्याभावग्रहसामग्रीत्वेन प्रतिबन्धकः । सत्प्रतिपक्षे प्रतिहेतुः साध्याभावसाधकोऽत्र तु हेतुरेवेति विशेषः । साध्याभावसाधक एव साध्यसाधकत्वेनोपन्य-

स्त इत्यर्थाक्तविशेषोपस्थापकत्वाच्च विशेषः । सत्प्रतिपक्षः साध्याभावव्याप्यवान् पक्षः । अगृहीताप्रामाण्यकसाध्यव्याप्यवत्त्वेनोपस्थितिकालीनागृहीताप्रामाण्यकसाध्याभावव्याप्यवत्त्वेनोपस्थितिविषयस्तथेत्यन्ये । अत्र च परस्पराभावव्याप्यवत्ताज्ञानात् परस्परानुमितिप्रतिबन्धः फलम् । अत्र केचित् । यथा घटाभावव्याप्यवत्ताज्ञाने विद्यमानेऽपि घटचक्षुःसंयोगे सति घटवत्ताज्ञानं जायते, यथा च सत्यपि पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञाने पित्तादिदोषे पीतः शङ्ख इति धीर्जायते, एवं कोटिद्वयव्याप्यवत्तादर्शने कोटिद्वयप्रत्यक्षरूपः संशयो भवति, तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भवत्येव । यत्र चैककोटिव्याप्यदर्शनं तत्राधिकबलतया द्वितीयकोटिभानप्रतिबन्धान्न संशयः । फलबलेन चाधिकसमबलभावः कल्प्यत इति वदन्ति । तन्न । तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेषशाब्दबोधादेरनुदयाल्लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे तस्य

प्रतिबन्धकता लाघवात्, न तूपनीतभानाविशेषे शाब्दबोधे च पृथक् प्रतिबन्धकता गौरवात्, तथा च प्रतिबन्धकसत्त्वात् कथमनुमितिः। न हि लौकिकसन्निकर्षस्थले प्रत्यक्षमिव सत्प्रतिपक्षस्थले संशयानुमितिः प्रामाणिकी, येनानुमितिभिन्नत्वेनापि विशेषणीयम् । यत्र कोटिद्वयव्याप्यवत्ताज्ञानं तत्रोभयत्राप्रामाण्यज्ञानात् संशयो नान्यथा, अगृहीताप्रामाण्यकस्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वादिति । आश्रयासिद्ध्याद्यन्यतमत्वमसिद्धित्वम् । आश्रयासिद्धिः पक्षे पक्षतावच्छेदकस्याभावः । यत्र च काञ्चनमयः पर्व्वतो वह्निमानिति साध्यते तत्र पर्व्वतो न काञ्चनमय इति ज्ञाने विद्यमाने काञ्चनमयपर्व्वते परामर्शप्रतिबन्धः फलम् । स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वाभिमतस्याभावः । अत्र च ह्रदो द्रव्यं धूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे साध्यव्याप्यहेतुमत्त्वज्ञानरूपपरामर्शप्रतिबन्धः फलम् । साध्याप्रसिद्धिरपि व्याप्यत्वासिद्धिः । सा च साध्ये सा-

ध्यतावच्छेदकाभावः । तथा च काञ्चनमयवह्निमानित्यादौ साध्ये साध्यतावच्छेदकाभावे ज्ञाते साध्यतावच्छेदकविशिष्टसाध्यव्याप्यवत्ताज्ञानरूपपरामर्शप्रतिबन्धः फलम् । एवं हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः । यथा च काञ्चनमयधूमादित्यादौ हेतुतावच्छेदकविशिष्टहेतोर्ज्ञानाभावात् तद्धेतुकव्याप्तिज्ञानादेरभावः फलम् । एवं वह्निमान् नीलधूमादित्यादौ गुरुतया नीलधूमत्वं हेतुतानवच्छेदकमिति व्याप्यत्वासिद्धिरित्यपि वदन्ति । बाधस्तु पक्षे साध्याभावादिः । एतस्यानुमितिप्रतिबन्धः फलम् । तद्धर्म्मिकतदभावनिश्चयो लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्म्मिकतज्ज्ञानमात्रे विरोधीति । न तु तत्र संशयसाधारणं पक्षे साध्यसंसृष्टत्वज्ञानमनुमितिकारणं तद्विरोधितया च बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वमिति युक्तम् । अप्रसिद्धसाध्यकानुमित्यनापत्तेः, साध्यसंशयं विनाऽप्यनुमित्युत्पत्तेश्च । एवं साध्याभावज्ञाने प्रमात्वज्ञानमपि न प्रतिबन्धकम्, प्रमाणा-

भावात्, गौरवाच्च । अन्यथा सत्प्रतिपक्षादावपि तदभावव्याप्यवत्ताज्ञाने प्रमात्वविषयकत्वेन प्रतिबन्धकतापत्तेः । किं तु भ्रमत्वज्ञानानास्कन्दितबाधादिबुद्धेः प्रतिबन्धकता, तत्र भ्रमत्वशङ्काविघटने प्रामाण्यज्ञानं क्व चिदुपयुज्यते । न च बाधस्थले पक्षे हेतुसत्त्वे व्यभिचारः, पक्षे हेत्वभावे तु स्वरूपासिद्धिरेव दोष इति वाच्यम् । बाधज्ञानस्य व्यभिचारज्ञानादेर्भेदात् । किं च यत्र परामर्शानन्तरं बाधबुद्धिस्तत्र व्यभिचारज्ञानादेरकिञ्चित्करत्वाद् बाधस्यानुमितिप्रतिबन्धकत्वं वाच्यम् । एवं यत्रोत्पत्तिक्षणावच्छिन्ने घटादौ गन्धव्याप्यपृथिवीत्वज्ञानं तत्र बाधस्यैव प्रतिबन्धकत्वं वाच्यम् । न च घटे गन्धसत्त्वात् कथं बाध इति वाच्यम् । पक्षतावच्छेदकदेशकालावच्छेदेनानुमितेरनुभवसिद्धत्वादिति । सत्प्रतिपक्षभिन्ना ये हेत्वाभासव्याप्यास्ते तन्मध्य एवान्तर्भवन्ति, अन्यथा हेत्वाभासाधिक्यप्रसङ्गात् । बाधव्याप्यसत्प्रतिपक्षस्तु भिन्न एव स्वतन्त्रेच्छेन मुनिना पृथगुपादा-

नात् । सत्प्रतिपक्षव्याप्यस्तु न प्रतिबन्धक इति प्रघट्टकार्थः ।

य: सपक्षे विपक्षे च
भवेत् सारणस्तु सः ॥ ७३ ॥

य: सपक्ष इति । सपक्षविपक्षवृत्तिः साधारण इत्यर्थः । सपक्षो निश्चितसाध्यवान्, विपक्षः साध्याभाववान् । विरुद्धवारणाय सपक्षवृत्तित्वमुक्तम्, वस्तुतो विपक्षवृत्तित्वमेव वाच्यम् । विरुद्धस्य साधारणत्वेऽपि दूषकताबीजस्य भिन्नतया तस्य पार्थक्यात् ।

यस्तूभयस्माद् व्यावृत्तः
स त्वसाधारणो मतः ।

यस्तूभयस्मादिति । सपक्षविपक्षव्यावृत्त इत्यर्थः । सपक्षः साध्यवत्तया निश्चितः, विपक्षः साध्यशून्यतया निश्चितः । शब्दोऽनित्यः शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वसन्देहस्तदा सपक्षत्वं विपक्षत्वं च घटादीनामेव, तद्व्यावृत्तं च शब्दत्वमिति तदा तदसाधारणम् । यदा तु शब्देऽनित्यत्वनिश्चयः तदा नासारणः । इदं च

प्राचां मतम्, नवीनमतं तु पूर्व्वमुक्तम् ।

तथैवानुपसंहारी

केवलान्वयिपक्षकः ॥ ७४ ॥

केवलान्वयिपक्षक इति । केवलान्वयिधर्म्मावच्छिन्नपक्षक इत्यर्थः । सर्व्वमभिधेयं प्रमेयत्वादित्यादौ सर्व्वस्यैव पक्षत्वात् सामानाधिकरण्यग्रहस्थलान्तराभावान्नानुमितिः । इदं तु न सम्यक् । पक्षैकदेशे सहचारग्रहेऽपि क्षतेरभावात् । अस्तु वा सहचाराग्रहस्तावताप्यज्ञानरूपाऽसिद्धिरेव न तु हेत्वाभासत्वं तस्य, तथापि केवलान्वयिसाध्यकत्वं तत्त्वमित्युक्तम् ।

यः साध्यवति नैवास्ति

स विरुद्ध उदाहृतः ।

यः साध्यवतीति । एवकारेण साध्यवत्त्वावच्छेदेन हेत्वभावो बोधितः । तथा च साध्यव्यापकीभूताभावप्रतियोगित्वं तदर्थः ।

असिद्धिं विभजते । आश्रयासिद्धिरित्यादि ।

आश्रयासिद्धिराद्या स्यात्

स्वरूपासिद्धिरप्यथ ७५

व्याप्यत्वासिद्धिरपरा
स्यादसिद्धिरतस्त्रिधा ।
पक्षासिद्धिर्यत्र पक्षो
भवेन्मणिमयो गिरिः ॥ ७६ ॥

पक्षासिद्धिरिति । आश्रयासिद्धिरित्यर्थः ।

ह्रदो द्रव्यं धूमवत्त्वा-
दत्रासिद्धिरथापरा ।

अपरेति । स्वरूपासिद्धिरित्यर्थः ।

व्याप्यत्वासिद्धिरपरा
नीलधूमादिके भवेत् ॥ ७७ ॥

नीलधूमादिक इति । नीलधूमत्वं गुरुतया न हेतुतावच्छेदकम्, समानाधिकरणव्याप्यतावच्छेदकधर्म्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वात् । धूमप्रागभावत्वसंग्रहाय समानाधिकरणेति ।

विरुद्धयोः परामर्शे
हेत्वोः सत्प्रतिपक्षता ।

विरुद्धयोरिति । कपिसंयोगतदभावव्याप्यवत्त्वपरामर्शेऽपि न सत्प्रतिपक्षितत्वमत उक्तं

विरुद्धयोरिति। तथा च स्वसाध्यविरुद्धसाध्याभा-
वव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्ता -
परामर्शविषय इत्यर्थः।

साध्यशून्यो यत्र पक्ष-
स्त्वसौ बाध उदाहृतः ॥ ७८ ॥
उत्पत्तिकालीनघटे
गन्धादिर्यत्र साध्यते ।

साध्यशून्य इति। पक्षः पक्षतावच्छेदकवि-
शिष्ट इत्यर्थः। तेन घटे गन्धसत्त्वेऽपि न क्षतिः।
एवं मूलावच्छिन्नो वृक्षःकपिसंयोगीत्यत्रापि बो-
ध्यम्।

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचि-
तायां सिद्धान्तमुक्तावल्यामनुमानखण्डम् ॥

उपमितिं व्युत्पादयति। ग्रामीणस्येति।

ग्रामीणस्य प्रथमतः
पश्यतो गवयादिकम् ॥ ७९ ॥
सादृश्यधीर्गवादीनां
या स्यात् सा करणं मतम्।
वाक्यार्थस्यातिदेशस्य

स्मृतिर्व्यापार उच्यते ॥ ८० ॥

गवयादिपदानां तु

शक्तिधीरुपमाफलम्

यत्रारण्यकेन केन चिद्ग्रामीणं प्रत्युक्तं गोसदृशो गवयपदवाच्य इति, पश्चाच्च ग्रामीणेन क्व चिदरण्ये गवयो दृष्टस्तत्र गोसादृश्यज्ञानं यत्तदुपमितिकरणम् । तदनन्तरं गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणं जायते तदेव व्यापारः । तदनन्तरं तत्र गवयो गवयपदवाच्य इति ज्ञानं जायते तदुपमितिः, न त्वयं गवयपदवाच्य इत्युपमितिः, गवयान्तरे शक्तिग्रहाभावप्रसङ्गात् ।

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यामुपमानखण्डम् ॥

शाब्दबोधप्रकारं दर्शयति । पदज्ञानं त्विति ।

पदज्ञानं तु करणं

न तु ज्ञायमानं पदं करणं पदाभावेऽपि मौनिश्लोकादौ शाब्दबोधात् ।

द्वारं तत्र पदार्थधीः ॥ ८१ ॥
शाब्दबोधः फलं तत्र
शक्तिधीः सहकारिणी।

पदार्थधीरिति। पदजन्यपदार्थस्मरणं व्यापारः, अन्यथा पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः। तत्रापि वृत्त्या पदजन्यत्वं बोध्यम्, अन्यथा घटादिपदात् समवायसम्बन्धेनाकाशस्मरणे जात आकाशस्यापि शाब्दबोधापत्तेः। वृत्तिश्च शक्तिलक्षणान्यतरः सम्बन्धः। अत्रैव शक्तिज्ञानस्योपयोगः पूर्वं शक्तिग्रहाभावे पदज्ञानेऽपि तत्सम्बन्धेन स्मरणानुपपत्तेः। पदज्ञानस्य च सम्बन्धिज्ञानविधयाऽर्थस्मारकत्वम्। शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः, स चास्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपः। आधुनिके नाम्नि शक्तिरस्त्येव, एकादशेऽहनि पिता नाम कुर्य्यादितीश्वरेच्छायाः सत्त्वात्। आधुनिके तु सङ्केते न शक्तिरिति सम्प्रदायः। नव्यास्त्वीश्वरेच्छा न शक्तिः किं त्विच्छैव तेनाधुनिकसङ्केतेऽपि श-

क्तिरस्त्यथेवेति वदन्ति। शक्तिग्रहश्च व्याकरणादितः । तथाहि।" शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च। वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः"। धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति क्वचित्तु सति बाधके त्यज्यतेऽपि। यथा वैयाकरणैराख्यातस्य कर्त्तरि शक्तिरुच्यते चैत्रः पचतीत्यादौ कर्त्रा सह चैत्रस्याभेदान्वयस्तच्च गौरवात् त्यज्यते किं तु कृतौ शक्तिर्लाघवात्। कृतिश्चैत्रादौ प्रकारीभूय भासते। न च कर्त्तुरनभिधानाच्चैत्रादिपदानन्तरं तृतीया स्यादिति वाच्यम्। कर्त्तृसंख्यानभिधानस्य तत्र तन्त्रत्वात्। संख्याभिधानयोग्यश्च कर्म्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यः। कर्म्मत्वादीत्यस्य विशेषणत्वतात्पर्य्याविषयत्वमर्थः, तेन चैत्र इव गच्छतीत्यादौ न चैत्रे संख्यान्वयः, यत्र कर्म्मादौ न विशेषणत्वतात्पर्य्यं तद्वारणाय प्रथमान्तेति। यद्वा धात्वर्थातिरिक्ताविशेषणत्वं प्रथमदलार्थः, तेन चैत्र इव गच्छतीत्यत्र चैत्रादेर्वारणम्। स्तोकं

पचतीत्यादौ स्तोकादेर्वारणाय च द्वितीयदलम् । तस्य द्वितीयान्तोपस्थाप्यत्वाद्वारणम् । एवं व्यापारेऽपि न शक्तिर्गौरवात् । रथो गच्छतीत्यादौ व्यापार आश्रयत्वे वा लक्षणा, जानातीत्यादौ त्वाश्रयत्वे, नश्यतीत्यादौ प्रतियोगित्वे निरूढलक्षणा । उपमानाद्‌ यथा शक्तिग्रहस्तथोक्तम् । एवं कोषादपि शक्तिग्रहः सति बाधके क्वचित् त्यज्यते । यथा नीलादिपदानां नीलरूपादौ नीलादिविशिष्टे च शक्तिः कोषे व्युत्पादिता तथापि लाघवाद्‌ नीलादौ शक्तिः, नीलादिविशिष्टे लक्षणेति । एवमाप्तवाक्यादपि, यथा कोकिलः पिकपदवाच्य इत्यादिशब्दात् पिकादिपदशक्तिग्रहः । एवं व्यवहारादपि, यथा प्रयोजकवृद्धेन घटमानयेत्युक्तं तच्छ्रुत्वा प्रयोज्यवृद्धेन घट आनीतस्तदवधार्य्य पार्श्वस्थो बालो घटानयनरूपं कार्य्यं घटमानयेतिशब्दप्रयोज्यमित्यवधारयति ततश्च घटं नय गामानयेत्यादावावापोद्वापाभ्यां घटादिपदानां कार्य्यान्वितघटादौ शक्तिं गृह्णाति । इत्थं च भूतले नीलो घट इत्या-

दिशब्दान्न शाब्दबोधः, घटादिपदानां कार्य्या-न्वितघटादिबोधे सामार्थ्यावधारणात्, कार्य्यता-बोधं प्रति च लिङादीनां सामर्थ्यात् तदभावान्न शाब्दबोध इति केचित् । तन्न । प्रथमतः का-र्य्यान्वितघटादौ शक्त्यवधारणेऽपि लाघवेन प-श्चात्तस्य परित्यागौचित्यात् । अत एव चैत्र पु-त्रस्ते जातः कन्या ते गर्भिणी जातेत्यादौ मुखप्र-सादमुखमालिन्याभ्यां सुखदुःखे अनुमाय तत्का-रणत्वेन परिशेषाच्छाब्दबोधं निर्णीय तद्धेतुतया तं शब्दमवधारयति । तथा च व्यभिचारात् कार्य्या न्विते न शक्तिः । न च तत्र तं पश्येत्यादिशब्दान्त-रमध्याहार्य्यम् । मानाभावात्, चैत्र पुत्रस्ते जातो मृतश्चेत्यादौ तदभावाच्च । इत्थं च लाघवादन्वित-घटेऽपि शक्तिं त्यक्त्वा घटपदस्य घटमात्रे शक्ति-मवधारयति । एवं वाक्यशेषादपि शक्तिग्रहः । य-था यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूक-विशेष आर्य्याणां प्रयोगः कङ्गौ च म्लेच्छानां तत्र हि "अथान्या ओषधयो म्लायन्ते अथैते मोदमा-नास्तिष्ठन्ति" उक्तं च "वसन्ते सर्व्वशस्यानां जा-

यते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिन" इतीति वाक्यशेषाद् दीर्घशूके शक्तिर्निर्णीयते कङ्गौ तु शक्तिभ्रमात्प्रयोगो नानाशक्तिकल्पने गौरवात् । हरिपदादौ तु विनिगमकाभावान्नानाशक्तिकल्पनम् । एवं विवरणादपि शक्तिग्रहः, विवरणं तु तत्समानार्थपदान्तरेण तदर्थकथनम्, यथा घटोऽस्तीत्यस्य कलसोऽस्तीत्यनेन विवरणाद्घटपदस्य कलसे शक्तिग्रहः । एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणादाख्यातस्य यत्नार्थकत्वं कल्पयते । एवं प्रसिद्धपदसान्निध्यादपि शक्तिग्रहः, यथेह सहकारतरौ मधुरं पिको रौतीत्यादौ पिकपदस्य शक्तिग्रह इति । तत् जातावेव शक्तिर्न तु व्यक्तौ व्यभिचारादानन्त्याच्च व्यक्तिं विना च जातिभानस्यासम्भवाद्व्यक्तेरपि भानमिति केचित् । तन्न । शक्तिं विना व्यक्तिभानानुपपत्तेः । न च व्यक्तौ लक्षणा । अनुपपत्तिप्रतिसन्धानं विनापि व्यक्तिबोधात् । न च व्यक्तिशक्तावानन्त्यम् । सकलव्यक्तावेकस्या एव शक्तेः स्वीकारात् । न चाननुगमः ।

गोत्वादेरेवानुगमकत्वात् । किं च गौः शक्येति शक्तिग्रहो यदि तदा व्यक्तौ शक्तिर्यदि तु गोत्वं शक्यमिति शक्तिग्रहस्तदा गोत्वप्रकारकपदार्थस्मरणं शाब्दबोधश्च न स्यात् समानप्रकारकत्वेन शक्तिज्ञानस्य पदार्थस्मरणं शाब्दबोधं प्रति च हेतुत्वात् । किं च गोत्वे यदि शक्तिस्तदा गोत्वत्वं शक्यतावच्छेदकं वाच्यं गोत्वत्वं तु गवेतरासमवेतत्वे सति सकलगोसमवेतत्वं तथा च गोव्यक्तीनां शक्यतावच्छेदकेऽनुप्रवेशात्तवैव गौरवम् । तस्मात्तत्तज्जात्याकृतिविशिष्टतत्तद्व्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तौ विश्राम्यतीति । शक्तं पदं तु क्वचिद्यौगिकं क्वचिद्रूढं क्वचिद्योगरूढं क्वचिद्यौगिकरूढम् । यत्रावयवार्थएव बुध्यते तद्यौगिकं यथा पाचकादिपदम् । यत्रावयवशक्तिनैरपेक्षेण समुदायशक्तिमात्रेण बुध्यते तद्रूढं यथा गोपदमण्डलादिपदम् । यत्र त्ववयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढं यथा पङ्कजादिपदम् । तथाहि । पङ्कजपदमवयवशक्त्या पङ्कजनिकर्तृ-

रूपमर्थं बोधयति समुदायशक्त्या च पद्मत्वेन रूपेण पद्मं बोधयति। न च केवलावयवशक्त्या कुमुदे प्रयोगः स्यादिति वाच्यम्। रूढिज्ञानस्य केवलयौगिकार्थप्रतिबन्धकत्वादिति प्राञ्चः। वस्तुतस्तु समुदायशक्त्योपस्थितपद्मेऽवयवार्थपङ्कजनिकर्तुरन्वयो भवति सान्निध्यात्, यत्र रूढ्यर्थस्य बाधः प्रतिसन्धीयते तत्र लक्षणया कुमुदादेर्बोधः, यत्र तु कुमुदत्वेन रूपेण बोधे न तात्पर्य्यज्ञानं पद्मत्वस्य च बाधस्तत्रावयवशक्तिमात्रेण निर्व्वाह इत्यप्याहुः। यत्र तु स्थलपद्मादाववयवार्थबाधस्तत्र समुदायशक्त्या पद्मत्वेन रूपेण बोधः। यदि तु स्थलपङ्कजं विजातीयमेव तदा लक्षणैव। यत्रावयवार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढं यथोद्भिदादिपदम्। तत्र हि ऊर्द्ध्व भेदनकर्त्ता तरुगुल्मादिरपि बुध्यते यागविशेषोऽपीति।

लक्षणा शक्यसम्बन्ध-
स्तात्पर्य्यानुपपत्तितः ॥ ८२ ॥

लक्षणा शक्यसम्बन्ध। इत्यादि। गङ्गायां घोष

इत्यादौ गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्य्यानुपपत्तिर्व्वा यत्र प्रतिसन्धीयते तत्र लक्षणया तीरस्य बोधः। सा च शक्यसम्बन्धः। तथाहि। प्रवाहरूपशक्यार्थसम्बन्धस्य तीरे गृहीतत्वात्तीरस्य स्मरणं ततः शाब्दबोधः। परं तु यद्यन्वयानुपपत्तिर्लक्षणाबीजं स्यात्तदा यष्टीः प्रवेशयेत्यत्र लक्षणा न स्यात् यष्टिषु प्रवेशान्वयस्यानुपपत्तेरभावात्, तत्र च यष्टिप्रवेशे भोजनतात्पर्य्यानुपपत्त्या यष्टिधरे लक्षणा। एवं काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदस्य दध्युपघातके लक्षणा सर्व्वतो दधिरक्षायास्तात्पर्य्यविषयत्वात्। एवं छत्रिणो यान्तीत्यादौ छत्रिपदस्यैकसार्थवाहित्वेन लक्षणा। इयमेवाजहत्स्वार्था लक्षणेत्युच्यते, एकसार्थवाहित्वेन रूपेण छत्रितदन्ययोर्बोधात्। यदि चान्वयानुपपत्तिर्लक्षणाबीजं स्यात् तदा क्वचिद्गङ्गापदस्य तीरे क्वचिद्घोषपदस्य मत्स्यादौ लक्षणेति नियमो न स्यात्। इदं तु बोध्यम्। शक्यार्थसम्बन्धो यदि तीरत्वेन रूपेण गृहीतस्तदा तीरत्वेन तीरबोधः, यदि

तु गङ्गातीरत्वेन रूपेण गृहीतस्तदा तेनैव रूपेण स्मरणम् । अत एव लक्ष्यतावच्छेदके न लक्षणा तत्प्रकारकबोधस्य तत्र लक्षणां विनाप्युपपत्तेः । परं त्वेवं क्रमेण शक्यतावच्छेदकेऽपि शक्तिर्न स्यात् तत्प्रकारकशब्दार्थस्मरणं प्रति तत्पदस्य सामर्थ्यमित्यस्य सुवचत्वादिति विभावनीयम् । यत्र तु शक्यार्थस्य परम्परासम्बन्धरूपा लक्षणा सा लक्षितलक्षणेत्युच्यते । यथा द्विरेफादिपदे रेफद्वयसम्बन्धो भ्रमरपदे ज्ञायते भ्रमरपदस्य च सम्बन्धो भ्रमरे ज्ञायते तत्र लक्षितलक्षणा । किं तु लाक्षणिकं पदं नानुभावकं लाक्षणिकार्थस्य शाब्दबोधे तु पदान्तरं कारणम्, शक्तिलक्षणान्यतरसम्बन्धेनेतरपदार्थान्वितस्वशक्यार्थशाब्दबोधं प्रति पदानां सामर्थ्यावधारणात् । वाक्ये तु शक्तेरभावाच्छक्यसम्बन्धरूपा लक्षणापि नास्ति । यत्र गभीरायां नद्यां घोष इत्युक्तं तत्र नदीपदस्य नदीतीरे लक्षणा गभीरापदार्थस्य नद्या सहाभेदेनान्वयः क्वचिदेकदेशान्वयस्यापि स्वीकृतत्वात् । यदि तत्रैकदेशान्वयो

न स्वीक्रियते तदा नदीपदस्य गभीरनदीतीरे लक्षणा गभीरापदं तात्पर्य्यग्राहकम् । बहुव्रीहावप्येवम् । तत्र हि चित्रगुपदादौ यदैकदेशान्वयः स्वीक्रियते तदा गोपदस्य गोस्वामिनि लक्षणा गवि चित्राभेदान्वयः । यदि त्वेकदेशान्वयो न स्वीक्रियते तदा गोपदस्य चित्रगोस्वामिनि लक्षणा चित्रापदं तात्पर्य्यग्राहकम् । एवमारूढवानरो वृक्ष इत्यत्र वानरपदे वानरावेशकर्म्मणि लक्षणा, आरूढपदं च तात्पर्य्यग्राहकम् । एवमन्यत्रापि। तत्पुरुषे तु पूर्व्वपदे लक्षणा । तथाहि। राजपुरुषादिपदे राजपदार्थेन पुरुषादिपदार्थस्य साक्षान्नान्वयो निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधस्याव्युत्पन्नत्वात्, अन्यथा राजा पुरुष इत्यत्रापि तथान्वयबोधः स्यात् । पटो न घट इत्यादौ घटपटाभ्यां नञः साक्षादेवान्वयान्निपातातिरिक्तेति नीलो घट इत्यादौ नामार्थयोरभेदसम्बन्धेनान्वयाद्भेदेनेति । न च राजपुरुष इत्यादौ लुप्तविभक्तेः स्मरणं कल्प्यमिति वाच्यम् । अस्मृतविभक्तेरपि ततो बोधोदयात् । तस्माद्

राजपदादौ राजसम्बन्धिनि लक्षणा तस्य च पुरुषेण सहाभेदान्वयः । द्वन्द्वे तु धवखदिरौ छिन्धीत्यादौ धवः खदिरश्च विभक्त्यर्थद्वित्वप्रकारेण बुध्यते तत्र न लक्षणा । न च साहित्ये लक्षणेति वाच्यम् । साहित्यशून्ययोरपि द्वन्द्वदर्शनात् । न चैकक्रियान्वयित्वरूपं साहित्यमस्तीति वाच्यम् । क्रियाभेदे धवखदिरौ पश्य छिन्धीत्यादिदर्शनात् साहित्यस्याननुभवाच्च । तस्मात् साहित्यादिकं नार्थः । अत एव राजपुरोहितौ सायुज्यकामौ यजेयातामित्यत्र लक्षणाभावाद्द्वन्द्व आश्रीयते । किं तु वास्तवो भेदो यत्र तत्र द्वन्द्वः । न च नीलघटयोरभेद इत्यादौ कथमिति वाच्यम् । तत्र नीलपदस्य नीलत्वं घटपदस्य घटत्वम्, अभेद इत्यस्य चाश्रयाभेद इत्यर्थात् । समाहारद्वन्द्वे तु यदि समाहारोऽप्यनुभूयत इत्युच्यते तदाऽहिनकुलमित्यादौ परपदेऽहिनकुलसमाहारे लक्षणा पूर्वपदं तात्पर्यग्राहकम् । न च भेरीमृदङ्गं वादयेत्यत्र कथं समाहारस्यान्वयः, अपेक्षाबुद्धिविशेषरूपस्य

तस्य वादनासम्भवादिति वाच्यम् । परम्परा-सम्बन्धेन तदन्वयात् । एवं पञ्चपुलीत्यादावपि । परे त्वहिनकुलमित्यादावहिर्नकुलश्च बुध्यते प्रत्येकमेकत्वान्वयः, समाहारसंज्ञा च यत्रैकत्वं नपुंसकत्वं च प्राणितूर्य्येत्यादिसूत्रेणोक्तं तत्रैव, अन्यत्रैकवचनमसाध्विति वदन्ति । पितरौ श्वशुरावित्यादौ पितृपदे जनकदम्पत्योः श्वशुरपदे स्त्रीजनकदम्पत्योर्लक्षणा । एवमन्यत्रापि घटा इत्यादौ तु न लक्षणा घटत्वेन रूपेण नानाघटोपस्थितिसम्भवात् । कर्म्मधारयस्थले तु नीलोत्पलमित्यादावभेदसम्बन्धेन नीलपदार्थं उत्पलपदार्थे प्रकार स्तत्र च न लक्षणा,अत एव निषादस्थपतिं याजयेदित्यत्र न तत्पुरुषो लक्षणापत्तेः किं तु कर्म्मधारयो लक्षणाभावात् । न च निषादस्य सङ्करजातिविशेषस्य वेदानधिकाराद् याजनासम्भव इति वाच्यम् । निषादस्य विद्याप्रयुक्तेस्तत एव कल्पनात् । लाघवेन मुख्यार्थस्यान्वये तदनुपपत्त्या कल्पनायाः फलमुखगौरवतयाऽदोषत्वादिति । उपकुम्भमर्द्धपिप्पलीत्यादौ

परपदे तत्सम्बन्धिनि लक्षणा पूर्व्वपदार्थप्रधान-तया चान्वयबोध इति, इत्थं च समासे न क्वापि शक्तिः पदशक्त्यैव निर्व्वाहादिति ।

आसत्तिर्योग्यताकाङ्क्षा
तात्पर्य्यज्ञानमिष्यते ।
कारणम्,

आसत्तिरित्यादि । आसत्तिज्ञानं योग्यता-ज्ञानमाकाङ्क्षाज्ञानं तात्पर्य्यज्ञानं च शाब्दबोधे कारणम् ।

तत्रासत्तिपदार्थमाह । सन्निधानं त्विति ।

सन्निधानं तु पदस्यासत्तिरुच्यते।

यत्पदार्थस्य यत्पदार्थेनान्वयोऽपेक्षितस्तयो-रव्यवधानेनोपस्थितिः कारणम् । तेन गिरिर्भुक्त-मग्निमान् देवदत्तेनेत्यादौ न शाब्दबोधः, नीलो घटो द्रव्यं पट इत्यादावासत्तिभ्रमाच्छाब्दबोधः। आसत्तिभ्रमाच्छबदभ्रमाभावेऽपि न क्षतिः। ननु यत्र छत्री कुण्डली वासस्वी देवदत्त इत्युक्तं त-त्रोत्तरपदस्मरणेन पूर्व्वपदस्मरणस्य नाशादव्य-वधानेन तत्तत्पदस्मरणासम्भव इति चेन्न । प्र-

त्येकपदानुभवजन्यसंस्कारैश्चरमतावद्विषयकस्म-
रणस्याव्यवधानेनोत्पत्तेः । नानासन्निकर्षैरेक-
प्रत्यक्षस्येव नानासंस्कारैरेकस्मरणोत्पत्तेरपि स-
म्भवात् । तावत्पदसंस्कारसहितचरमवर्णज्ञान-
स्योद्बोधकत्वात् । कथमन्यथा नानावर्णकपद-
स्मरणम् । परं तु तावत्पदार्थानां स्मरणादेकदैव
खले कपोतन्यायात् तावत्पदार्थानां क्रियाकर्म्म-
भावेनान्वयबोधरूपः शाब्दबोधो भवतीति के
चित् । "वृद्धा युवानः शिशवः कपोताः खले य-
थामी युगपत् पतन्ति । तथैव सर्वे युगपत् पदा-
र्थाः परस्परेणान्वयिनो भवन्ति" । अपरे तु "य-
द्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते । तेन ते-
नान्वितः स्वार्थः पदैरेवावगम्यते" । तथा च
खण्डवाक्यार्थबोधानन्तरं तथैव पदार्थस्मृत्या
महावाक्यार्थबोध इत्यप्याहुः । एतेन तावद्व-
र्णाभिव्यङ्ग्यः पदस्फोटोऽपि निरस्तः । तत्तद्व-
र्णसंस्कारसहितचरमवर्णोपलम्भेन तद्व्यञ्जके-
नैवोपपत्तेरिति । इदं तु बोध्यम् । यत्र द्वारमि-
त्युक्तं तत्र पिधेहीति पदस्य ज्ञानादेव बोधो

न तु पिधानादिरूपार्थज्ञानात्, पदजन्यपदार्थोपस्थितेस्तच्छाब्दबोधे हेतुत्वात् । किं च क्रियाकर्म्मपदानां तेन तेनैव सह साकाङ्क्षत्वात् तेन क्रियापदं विना कथं शाब्दबोधः स्यात् । तथा पुष्पेभ्य इत्यादौ स्पृहयतीति पदाध्याहारं विना चतुर्थ्यनुपपत्तेः पदाध्याहार आवश्यकः ।

योग्यतां निर्व्वक्ति । पदार्थ इत्यादिना ।

पदार्थे तत्र तद्वत्ता
योग्यता परिकीर्त्तिता ।

एकपदार्थेऽपरपदार्थसम्बन्धो योग्यतेत्यर्थः । तज्ज्ञानाभावाच्च वह्निना सिञ्चतीत्यादौ न शाब्दबोधः । नन्वेतस्या योग्यताया ज्ञानं शाब्दबोधात्प्राक् सर्व्वत्र न सम्भवति वाक्यार्थस्यापूर्व्वत्वादिति चेन्न । तत्तत्पदार्थस्मरणे सति क्वचित्संशयरूपस्य क्वचिन्निश्चयरूपस्यापि योग्यताया ज्ञानस्य सम्भवात् । नव्यास्तु योग्यताया ज्ञानं न शाब्दज्ञाने कारणं वह्निना सिञ्चतीत्यादौ सेके वह्निकरणत्वाभावरूपायोग्यतानिश्चयेन प्रतिबन्धान्न शाब्दबोधः । तदभावनि-

श्चयस्य लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे प्रतिबन्धकत्वाच्छाब्दं प्रत्यपि प्रतिबन्धकत्वं सिद्धम्, योग्यताज्ञानविलम्बाच्च शाब्दविलम्बोऽसिद्ध इति वदन्ति ।

आकाङ्क्षां निर्व्वक्ति । यत्पदेनेत्यादि ।

यत्पदेन विना यस्या-
ननुभावकता भवेत् ॥ ८४ ॥
आकाङ्क्षा,

येन पदेन विना यत्पदस्यान्वयाननुभावकत्वं तेन सह तस्याकाङ्क्षेत्यर्थः । क्रियापदं विना कारकपदं नान्वयबोधं जनयतीति तेन तस्याकाङ्क्षा। व स्तुतस्तु क्रियाकारकपदानां सन्निधानमासत्त्या चरितार्थम् । परं तु घटकर्म्मताबोधं प्रति घटपदोत्तरद्वितीयाकाङ्क्षाज्ञानं कारणं तेन घटः कर्म्मत्वमानयनं कृतिरित्यादौ न बोधः। अयमेति पुत्रो राज्ञः पुरुषोऽपसार्य्यतामित्यादौ तु पुत्रेण सह राजपदस्य तात्पर्य्यग्रहाभावान्न तेन सहान्वयः ।

तात्पर्यं निर्व्वक्ति । वक्तुरिच्छेति ।

वक्तुरिच्छा तु तात्पर्य्यं परिकी-
र्त्तितम् ।

यदि तात्पर्य्यज्ञानं कारणं न स्यात् तदा सै-
न्धवमानयेत्यादौ क्व चिदश्वस्य क्व चिल्लवणस्य
बोधो न स्यात् । न च तात्पर्य्यग्राहकप्रकरणादी-
नामेव शाब्दबोधे कारणत्वमस्त्विति वाच्यम् ।
तेषामननुगमात्, तात्पर्य्यज्ञानजनकत्वेन तेषा-
मनुगमे तु तात्पर्य्यज्ञानमेव लाघवात्कारणमस्तु ।
इत्थं च वेदस्थलेऽपि तात्पर्य्यज्ञानार्थमीश्वरः क-
ल्प्यते । न च तत्त्वाध्यापकतात्पर्य्यज्ञानं कारणमि-
ति वाच्यम् । सर्गादावध्यापकाभावात् । न च प्र-
लय एव नास्तीति कुतः सर्गादिरिति वाच्यम् ।
प्रलयस्यागमप्रतिपाद्यत्वात् । इत्थं च शुकवा-
क्येऽपीश्वरीयतात्पर्य्यज्ञानं कारणम्, विसंवा-
दिशुकवाक्ये तु शिक्षयितुरेव तात्पर्य्यस्य ज्ञानं
कारणम् । अन्ये तु नानार्थादौ क्व चिदेव तात्प-
र्य्यज्ञानं कारणम्, तथा च शुकवाक्ये विनैव तात्प-
र्य्यज्ञानं शाब्दबोधः, वेदे त्वनादिमीमांसापरि-
शोधिततर्क्कैरेवार्थावधारणमित्याहुः ।

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां शब्दखण्डम् ॥

पूर्व्वमनुभवस्मरणभेदाद् बुद्धेर्द्वैविध्यमुक्तं तत्रानुभवप्रकारा दर्शिताः, सुगमतया स्मरणं न दर्शितम्। तत्र हि पूर्व्वानुभवः कारणम्। अत्र केचित्। अनुभवत्वेन न कारणत्वं किं तु ज्ञानत्वेनैव, अन्यथा स्मरणानन्तरं स्मरणं न स्यात् समानप्रकारकस्मरणेन पूर्व्वसंस्कारस्य विनष्टत्वात्। मन्मते तु तेनैव स्मरणेन संस्कारान्तरद्वारा स्मरणान्तरं जन्यत इत्याहुः। तन्न। यत्र समूहालम्बनोत्तरं घटपटादीनां क्रमेण स्मरणमजनिष्ट सकलविषयकस्मरणं तु नाभूत् तत्र फलस्य संस्कारनाशकत्वाभावात् कालस्य रोगस्य चरमफलस्य वा संस्कारनाशकत्वं वाच्यम्। तथा च न क्रमिकस्मरणानुपपत्तिः। न च पुनःपुनः स्मरणाद् दृढतरसंस्कारानुपपत्तिः। झटित्युद्बोधकसमवधानस्य दार्ढ्यपदार्थत्वात्। न च विनिगमनाविरहादेव ज्ञानत्वेनापि जनकत्वं स्यादिति वाच्यम्। विशेषधर्म्मेण व्यभिचाराज्ज्ञाने

सामान्यधर्म्मेणान्यथासिद्धत्वात् । कथमन्यथा दण्डस्य भ्रमिद्वारा द्रव्यत्वेन रूपेण न कारणत्वम् । न चान्तरालिकस्मरणानां संस्कारनाशकत्वसंशयाद् व्यभिचारसंशय इति वाच्यम् । अनन्तसंस्कारतन्नाशकल्पनापत्त्या चरमस्मरणस्यैव संस्कारनाशकत्वकल्पनेन व्यभिचारसंशयाभावात् ।

इति स्मृतिप्रक्रिया ।

इदानीं क्रमप्राप्तं मनो निरूपति । साक्षात्कार इति ।

साक्षात्कारे सुखादीनां
करणं मन उच्यते ॥ ८५ ॥

एतेन मनसि प्रमाणं दर्शितम् । तथाहि । सुखसाक्षात्कारः सकरणको जन्यसाक्षात्कारत्वाच्चाक्षुषवदित्यनुमानेन कारणस्य मनसः सिद्धिः । न चैवं दुःखादिसाक्षात्काराणामपि कारणान्तराणि स्युरिति वाच्यम् । लाघवादेकस्यैव तादृशसकलसाक्षात्कारकरणतया सिद्धेः । एवं दुःखादीनामसमवायिकारणसंयोगाश्रयतया म-

नःसिद्धिर्बोद्धव्या ।

मनसोऽणुत्वे प्रमाणमाह । अयौगपद्यादि-ति ।

अयौगपद्याज् ज्ञानानां
तस्याणुत्वमिहेष्यते ।

ज्ञानानां चाक्षुषरासनादीनां यौगपद्यमेकका-लोत्पत्तिर्नास्तीत्यनुभवसिद्धम्, तत्र नानेन्द्रिया-णां सत्यपि विषयसन्निकर्षे यत्सम्बन्धादेकेन्द्रि-येण ज्ञानमुत्पद्यते यदसम्बन्धाच्च परैर्ज्ञानं नो-त्पद्यते तन्मनः, विभुत्वे चासन्निधानं न सम्भ-वतीति न विभु मनः । न च तदानीमदृष्टविशे-षोद्बोधकविलम्बादेव तज्ज्ञानविलम्ब इति वा-च्यम् । तथा सति चक्षुरादीनामपि कल्पनानाप-त्तेः। न च दीर्घशष्कुलीभक्षणादौ नानावधानभा-जां च कथमेकदा नानेन्द्रियज्ञानमिति वाच्यम्। मनसोऽतिलाघवात् त्वरया नानेन्द्रियसम्बन्धा-न्नानाज्ञानोत्पत्तेः । उत्पलशतपत्रभेदादिवद् यौगपद्यप्रत्ययस्य तु भ्रान्तत्वात् । न च मन-सः सङ्कोचविकाशशालित्वादुभयोपपत्तिरस्तिव-

ति वाच्यम्। नानावयवतन्नाशादिकल्पने गौरवाल्लाघवान्निरवयवस्यैव मनसः कल्पनादिति संक्षेपः।

इति सिद्धान्तमुक्तावल्यां द्रव्यपदार्थव्याख्या समाप्ता।

द्रव्यं निरूप्य गुणं रूपयति। अथेत्यादिना।

अथ द्रव्याश्रिता ज्ञेया
निर्गुणा निष्क्रिया गुणाः ॥ ८६ ॥

गुणत्वजातौ किं मानमिति चेत्, इदम्। द्रव्यकर्म्मभिन्ने सामान्यवति या कारणता सा किञ्चिद्धर्म्मावच्छिन्ना निरवच्छिन्नकारणताया असम्भवात्, नहि रूपत्वादिकं सत्ता वा तत्रावच्छेदिका न्यूनातिरिक्तदेशवृत्तित्वात्, अतश्चतुर्विंशत्यनुगतं किंचिद्वाच्यं तदेव गुणत्वमिति सिद्धम्। द्रव्याश्रिता इति। यद्यपि द्रव्याश्रितत्वं न लक्षणं कर्म्मादावतिव्याप्तेस्तथापि द्रव्यत्वव्यापकतावच्छेदकसत्तान्यजातिमत्त्वं तदर्थः। भवति हि गुणत्वं द्रवयत्वव्यापकतावच्छेदकं तद्वत्ता च गुणानामिति। कर्म्मत्वं द्रव्यत्वं वा न द्रव्यत्व-

व्यापकतावच्छेदकं गगनादौ द्रव्यकर्म्मणोरभावात् । द्रव्यत्वत्वं सामान्यत्वादिकं च न जातिरिति तद्व्युदासः । निर्गुणा इति । यद्यपि निर्गुणत्वं कर्म्मादावपि । तथापि सामान्यवत्त्वे कर्म्मान्यत्वे च सति निर्गुणत्वं बोध्यम् । जात्यादीनां न सामान्यवत्त्वं कर्म्मणो न कर्म्मान्यत्वं द्रव्यस्य न निर्गुणत्वमिति तत्र नातिव्याप्तिः । निष्क्रियेति स्वरूपकथनं न तु लक्षणं गगनादावतिव्याप्तेः ।

रूपं रसः स्पर्शगन्धौ
परत्वमपरत्वकम् ।
द्रवो गुरुत्वं स्नेहश्च
वेगो मूर्त्तगुणा अमी ॥ ८७ ॥

मूर्त्तगुणा इति । अत्र वेगेन स्थितिस्थापकोऽप्युपलक्षणीयः । अमूर्त्तेषु न वर्त्तन्त इत्यर्थः । लक्षणं तु तावदन्यान्यत्वमेवमग्रेऽपि ।

धर्म्माधर्म्मौ भावना च
शब्दो बुद्ध्यादयोऽपि च ।
एतेऽमूर्त्तगुणाः सर्व्वे

विद्वद्भिः परिकीर्त्तिताः ॥ ८८ ॥

अमूर्त्तगुणा इति । मूर्त्तेषु न वर्तन्त इत्यर्थः ।

संख्यादयो विभागान्ता
उभयेषां गुणा मताः ।

उभयेषामिति । मूर्त्तामूर्त्तगुणा इत्यर्थः ।

संयोगश्च विभागश्च
संख्या द्वित्वादिकास्तथा ॥ ८९ ॥
द्विपृथक्त्वादयस्तद्व-
देतेऽनेकाश्रिता गुणाः ।

अनेकाश्रिता इति । संयोगद्वित्वादीनि द्विवृत्तीनि, त्रित्वचतुष्ट्वादिकं त्रिचतुरादिवृत्तीति बोध्यम् ।

अतः शेषा गुणाः सर्व्वे
मता एकैकवृत्तयः ॥ ९० ॥

अतः शेषा इति । रूपरसगन्धस्पर्शैकत्वपरिमाणैकपृथक्त्वपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दा इत्यर्थः ।

बुद्ध्यादिषट्कं स्पर्शान्ताः
स्नेहः सांसिद्धिको द्रवः ।
अदृष्टभावनाशब्दा

अमी वैशेषिका गुणाः ॥ ९१ ॥

बुद्ध्यादीति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना इ- त्यर्थः । स्पर्शान्ता रूपरसगन्धस्पर्शा इत्यर्थः । द्रवो द्रवत्वम् । वैशेषिका इति । विशेषा एव वैशेषिकाः स्वार्थे ठक्, विशेषगुणा इत्यर्थः ।

संख्यादिरपरत्वान्तो
द्रवोऽसांसिद्धिकस्तथा ।
गुरुत्ववेगौ सामान्य-
गुणा एते प्रकीर्त्तिताः ॥ ९२

सङ्ख्यादिरिति । सङ्ख्यापरिमाणपृथक्त्वसंयो- गविभागपरत्वापरत्वानीत्यर्थः ।

संख्यादिपरत्वान्तो
द्रवत्वं स्नेह एव च ।
एते तु द्वीन्द्रियग्राह्याः

द्वीन्द्रियेति । चक्षुषा त्वचापि ग्रहणयोग्यत्वात् ।

अथ स्पर्शान्तशब्दकाः ९३ ।
बाह्यैकैकेन्द्रियग्राह्याः

बाह्येति । रूपादीनां चक्षुरादिग्राह्यत्वात् ।

गुरुत्वादृष्टभावनाः ।

अतीन्द्रिया विभूनां तु
ये स्युर्वैशेषिका गुणाः ॥ ९४
अकारणगुणोत्पन्ना
एते तु परिकीर्त्तिताः ।

विभूनामिति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्न-धर्म्माधर्म्मभावनाशब्दा इत्यर्थः । अकारणेति । कारणगुणेन कार्य्ये ये गुणा उत्पद्यन्ते ते कारण-गुणपूर्व्वका रूपादयो वक्ष्यन्ते बुद्ध्यादयस्तु न तादृशा आत्मादेः कारणाभावात् ।

अपाकजास्तु स्पर्शान्ता
द्रवत्वं च तथाविधम् ९५ ॥
स्नेहवेगगुरुत्वैक-
पृथक्त्वपरिमाणकम् ।
स्थितिस्थापक इत्येते
स्युः कारणगुणोद्भवाः ९६

अपाकजास्त्विति । पाकजरूपादीनां का-रणगुणपूर्व्वकत्वाभावादपाकजा इत्युक्तम् । त-थाविधमपाकजम् । कारणगुणोद्भवा इति । तथैकत्वमपि बोध्यम् ।

संयोगश्च विभागश्च

वेगश्चैते तु कर्म्मजाः ।

कर्मजा इति । यद्यपि कर्मजत्वं न साधर्म्यं घटादावतिव्याप्तेः, संयोगजसंयोगेऽव्याप्तेश्च । तथापि कर्मजवृत्तिगुणत्वव्याप्यजातिमत्त्वं बोध्यम्, एवमन्यत्राप्यूह्यम् ।

स्पर्शान्तपरिमाणैक-

पृथक्त्वस्नेहशब्दके ॥ ९७ ॥

भवेदसमवायित्वम्,

स्पर्शान्तेति । स्पर्शोऽत्रानुष्णो ग्राह्यः । एकपृथक्त्वेत्यत्र त्वप्रत्ययस्य प्रत्येकमन्वयादेकत्वं पृथक्त्वं च ग्राह्यम् । पृथक्त्वपदेन चैकपृथक्त्वं विवक्षितम् । भवेदसमवायित्वमिति । घटादिरूपरसगन्धस्पर्शाः कपालादिरूपरसगन्धस्पर्शेभ्यो भवन्ति । एवं कपालादिपरिमाणादीनां घटादिपरिमाणाद्यसमवायिकारणत्वम् । एवं शब्दस्यापि द्वितीयशब्दं प्रत्यसमवायिकारणत्वम् । एवं स्थितिस्थापकैकपृथक्त्वयोरपि बोध्यम् ।

अथ वैशेषिके गुणे ।

आत्मनः स्यान्निमित्तत्वम्,

निमित्तत्वमिति । बुद्ध्यादीनामिच्छादिनिमित्तत्वादिति भावः ।

उष्णस्पर्शगुरुत्वयोः ॥ ९८ ॥

वेगेऽपि च द्रवत्वे च

संयोगादिद्वये तथा ।

द्विधैव कारणत्वं स्यात्,

द्विधैवेति।असमवायिकारणत्वं निमित्तकारणत्वं च। तथाहि । उष्णस्पर्श उष्णस्पर्शस्यासमवायी पाकजे निमित्तम्, गुरुत्वं गुरुत्वपतनयोरसमवायि प्रतिघाते निमित्तम्,वेगो वेगस्पन्दयोरसमवाय्यभिघाते निमित्तम्, द्रवत्वं द्रवत्वस्यन्दनयोरसमवायि संग्रहे निमित्तम्, भेरीदण्डसंयोगः शब्दे निमित्तं भेर्याकाशसंयोगेऽसमवायी, वंशदलद्वयविभागः शब्देनिमित्तं वंशदलाकाशविभागेऽसमवायीति ।

अथ प्रादेशिको भवेत् ॥ ९९ ॥

वैशेषिको विभुगुणः

संयोगादिद्वयं तथा ।

प्रादेशिकोऽव्याप्यवृत्तिः ।

चक्षुर्ग्राह्यं भवेद्रूपं

चक्षुरिति । रूपत्वजातिः प्रत्यक्षसिद्धा । रूपशब्दोल्लेखिनी प्रतीतिर्नास्तीति चेत् । मास्तु रूपशब्दप्रयोगस्तथापि नीलपीतादिष्वनुगतजातिविशेषोऽनुभवसिद्ध एव । रूपशब्दाप्रयोगेऽपि नीलो वर्णः पीतो वर्णः इति वर्णशब्दोल्लेखिनी प्रतीतिरस्त्येव । एवं नीलत्वादिकमपि प्रत्यक्षसिद्धम् । न चैकैका एव नीलरूपादिव्यक्तय इत्येकव्यक्तिवृत्तित्वान्नीलत्वादिर्न जातिरिति वाच्यम् । नीलो नष्टो रक्त उत्पन्न इत्यादिप्रतीतेर्नीलादेरुत्पादविनाशशालितया नानात्वात् । अन्यथैकनीलनाशे जगदनीलमापद्येत । न च नीलसमवायरक्तसमवाययोरेव विनाशोत्पादविषयकोऽसावेष प्रत्यय इति वाच्यम् । प्रतीत्या समवायानुल्लेखात् । न च स एवायं नील इति प्रत्ययाल्लाघवाच्चैक्यमिति वाच्यम् । प्रत्यक्षस्य तज्जातीयविषयकत्वात् सैवेयं गुर्जरीतिवत् । लाघवं तु प्रत्यक्षबाधितम् । अन्य-

था घटादीनामप्यैक्यप्रसङ्गात् । उत्पादविनाश-
बुद्धेः समवायालम्बनत्वापत्तेरिति । एतेन रसा-
दिकं व्याख्यातम् । चक्षुर्ग्राह्यमिति चक्षुर्ग्राह्यवि-
शेषगुणत्वमित्यर्थः । एवमग्रेऽपि ।

द्रव्यादेरुपलम्भकम् ॥ १०० ॥

द्रव्यादेरिति । उपलम्भकमुपलब्धिकारणम् ।
इदमेव विवृणोति । चक्षुष इति

चक्षुषः सहकारि स्यात्

द्रव्यगुणकर्म्मसामान्यानां चाक्षुषप्रत्यक्षं प्रत्युद्-
भूतरूपं कारणम् ।

शुक्लादिकमनेकधा ।

शुक्लादीति । तच्च रूपं शुक्लनीलपीतरक्तकृष्ण-
कर्व्वुरादिभेदादनेकप्रकारकं भवति । ननु कर्व्वुरं
कथमतिरिक्तं रूपं भवति । इत्थम् । नीलपी-
ताद्यवयवारब्धोऽवयवी न तावन्नीरूपोऽप्रत्यक्ष-
त्वप्रसङ्गात्, नापि व्याप्यवृत्तिनीलादिकमुत्पद्य-
ते पीतावच्छेदेनापि नीलोपलब्धिप्रसङ्गात्, ना-
प्यव्याप्यवृत्तिनीलादिकमुत्पद्यते व्याप्यवृत्ति-
जातीयगुणानामव्याप्यवृत्तित्वे विरोधात् । त-

स्मान्नानाजातीयरूपैरवयविनि विजातीयं चित्रं रूपमारभ्यते । अत एवैकं चित्रमित्यनुभवोऽपि, नानारूपकल्पने तु गौरवात् । इत्थं च नीलादीनां पीताद्यारम्भे प्रतिबन्धकत्वकल्पनादवयविनि न पीताद्युत्पत्तिः । एतेन स्पर्शोऽपि व्याख्यातः । रसादिकमपि नाव्याप्यवृत्तिः किं तु नानाजातीयरसवद्वयवैरारब्धेऽवयविनि रसाभावेऽपि न क्षतिः । तत्र रसनयाऽवयवरस एव गृह्यते रसनेन्द्रियादीनां द्रव्यग्रहे सामर्थ्याभावात् । अवयविनीरसत्वेऽपि क्षतेरभावात् नव्यास्तु तत्राव्याप्यवृत्त्येव नानारूपं नीलादेः पीतादिप्रतिबन्धकत्वकल्पने गौरवात् । अत एव "लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डर" इत्यादिशास्त्रमप्युपपद्यते । न च व्याप्याव्याप्यवृत्तिजातीययोर्द्वयोर्विरोधो, मानाभावात् । न च लाघवादेकं रूपम् । अनुभवविरोधात् । अन्यथा घटादेरपि लाघवादैक्यं स्यादिति । एतेन स्पर्शादिकं व्याख्यातमिति वदन्ति ।

जलादिपरमाणौ त-

त्वनित्यमन्यत् सहेतुकम् ॥ १०१ ॥

जलादीति । जलपरमाणौ तेजःपरमाणौ च रूपं नित्यम् । पृथिवीपरमाणुरूपं तु न नित्यं पाकेन रूपान्तरोत्पत्तेः । न हि घटस्य पाकानन्तरं तदवयवोऽपक्व उपपद्यते, न हि रक्तकपालस्य कपालिका नीलावयवा भवति । एवं क्रमेण परमाणावपि पाकसिद्धेः । अन्यज्जलतेजःपरमाणुरूपभिन्नं रूपम् । सहेतुकं जन्यम् ।

रसं निरूपयति । रसस्त्विति ।

रसस्तु रसनाग्राह्यो

मधुरादिरनेकधा ।

सहकारी रसज्ञायाः

सहकारीति । रासनज्ञाने रसः कारणमित्यर्थः ।

नित्यतादि च पूर्व्ववत् ॥ १०२ ॥

पूर्व्ववदिति जलपरमाणौ रसो नित्योऽन्यः सर्व्वोऽपि रसोऽनित्य इत्यर्थः ।

गन्धं निरूपयति । घ्राणग्राह्य इति ।

घ्राणग्राह्यो भवेद् गन्धो

घ्राणस्यैवोपकारकः ।

सौरभं चासौरभं च

स द्वेधा परिकीर्त्तितः । १९३ ।

उपकारको घ्राणजन्यज्ञाने कारणमित्यर्थः । गन्धः सर्व्वोऽनित्य एव ।

स्पर्शं निरूपयति । स्पर्श इति ।

स्पर्शस्त्वगिन्द्रियग्राह्य-

स्त्वचः स्यादुपकारकः ।

उपकारक इति । स्पार्शनप्रत्यक्षे स्पर्शः कारणमित्यर्थः ।

अनुष्णाशीतशीतोष्ण-

भेदात् स त्रिविधो मतः । १०४ ।

अनुष्णाशीत इति । पृथिव्या वायोश्च स्पर्शोऽनुष्णाशीतः, जलस्य शीतः, तेजस उष्णः ।

काठिन्यादि क्षितावेव

काठिन्येति । कठिनसुकुमारस्पर्शौ पृथिव्या एवेत्यर्थः । कठिनत्वादिकं तु न संयोगनिष्ठोजातिविशेषः, चक्षुर्ग्राह्यतापत्तेः ।

नित्यतादि च पूर्ववत् ।

पूर्व्ववदिति । जलतेजोवायुपरमाणुस्पर्शा

नित्यास्तद्भिन्नरूपस्पर्शास्तत्रानित्या इत्यर्थः ।

एतेषां पाकजत्वं तु
क्षितौ नान्यत्र कुत्र चित् । १०५ ।

एतेषां रूपरसगन्धस्पर्शानाम् । नान्यत्रेति । पृथिव्या हि रूपरसगन्धस्पर्शपरावृत्तिः पावकसंयोगादुपलभ्यते, न हि शतधापि ध्मायमाने जलादौ रूपादिकं परावर्त्तते । नीरे सौरभमौष्ण्यं चान्वयव्यतिरेकाभ्यामौपाधिकमेवेति निर्णीयते पवनपृथिव्योः शीतस्पर्शादिवत् ।

तत्रापि परमाणौ स्यात्
पाको वैशेषिके नये ।

तत्रापि पृथिवीष्वपि परमाणावेव पाक इति वैशेषिका वदन्ति । तेषामयमाशयः । अवयविनाऽवष्टब्धेष्ववयवेषु पाको न सम्भवति, परं तु वह्निसंयोगेनावयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः, पुनश्च पक्वपरमाणुसंयोगाद् द्व्यणुकादिक्रमेण पुनर्म्महावयविपर्य्यन्तमुत्पत्तिः, तेजसामतिशयितवेगवशात् पूर्व्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति । अथ द्व्य-

णुकादिविनाशमारभ्य कतिभिः क्षणैः पुनरुत्प-त्त्या रूपादिमद्भवतीति शिष्यबुद्धिवैशद्याय प्र-क्रिया। तत्र विभागजविभागानङ्गीकारे नवक्षणा। विभागजविभागाङ्गीकारे तु विभागः किञ्चि-त्सापेक्षो विभागं जनयेत्, निरपेक्षस्य तत्त्वे क-र्म्मत्वं स्यात् । संयोगविभागयोरनपेक्षं कारणं कर्म्मेति हि वैशेषिकसूत्रम् । स्वोत्तरोत्पन्न-भावान्तरानपेक्षत्वं च तस्यार्थः । अन्यथा क-र्म्मणोऽप्युत्तरसंयोगजनने पूर्व्वसंयोगनाशापेक्ष-णादव्याप्तिः स्यादिति । तत्र यदि द्रव्यारम्भक-संयोगविनाशविशिष्टं कालमपेक्ष्य विभागज-विभागः स्यात् तदा दशक्षणा, अथ द्रव्यना-शविशिष्टं कालमपेक्ष्य विभागजविभागः स्या-त् तदैकादशक्षणा । तथाहि । वह्निसंयोगात् प-रमाणौ कर्म्म, ततः परमाण्वन्तरेण विभागः, तत आरम्भकसंयोगनाशः, ततो द्व्यणुकनाशः १, ततः परमाणौ श्यामादिनाशः २, ततो रक्ताद्यु-त्पत्तिः ३, ततो द्रव्यारम्भानुगुणक्रिया ४, ततो विभागः ५, ततः पूर्व्वसंयोगनाशः ६, तत आर-

म्भकसंयोगः, ७ ततोद्व्यणुकोत्पत्तिः ८, ततो रक्ता-द्युत्पत्तिः ९, ननु श्यामादिनाशक्षणे रक्तोत्पत्ति-क्षणे वा परमाणौ द्रव्यारम्भानुगुणक्रियास्त्विति चेन्न । अग्निसंयुक्ते परमाणौ यत्कर्म्म तद्विना-शमन्तरेण गुणोत्पत्तिमन्तरेण च तत्र परमाणौ क्रियान्तराभावात्, कर्म्मवति कर्म्मानुत्पत्तेः । निर्गुणे द्रव्ये द्रव्यारम्भानुगुणक्रियानुपपत्तेश्च । तथापि परमाणौ श्यामादिनिवृत्तिसमकालं र-क्ताद्युत्पत्तिः स्यादिति चेन्न । पूर्व्वरूपादिध्वं-सस्य रूपान्तरे हेतुत्वादिति नवक्षणा । अथ द-शक्षणा सा चारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागजनने सति स्या-त् । तथाहि । वह्निसंयोगाद् द्व्यणुकारम्भके परमाणौ क्रिया, ततो विभागः, तत आरम्भक-संयोगनाशः, ततो द्व्यणुकनाशविभागजविभा-गौ १, ततः श्यामनाशपूर्व्वसंयोगनाशौ २, ततो रक्तोत्पत्त्युत्तरसंयोगौ ३, ततो वह्निनोदनजन्य-परमाणुकर्म्मणो नाशः ४, ततोऽदृष्टवदात्मसं-योगाद् द्रव्यारम्भानुगुणक्रिया ५, ततो विभा-

गः ६, ततः पूर्व्वसंयोगनाशः ७, तत आरम्भकसंयोगः ८, ततो द्व्यणुकोत्पत्तिः ९, ततो रक्तादुत्पत्तिः १०, इति । अथैकादशक्षणा । वह्निसंयोगात् परमाणौ कर्म्म, ततो विभागः, ततो द्रव्यारम्भकसंयोगनाशः, ततो द्व्यणुकनाशः १, ततो द्व्यणुकनाशविशिष्टं कालमपेक्ष्य विभागजविभागश्यामनाशौ २, ततः पूर्व्वसंयोगनाशरक्तोत्पत्ती ३, तत उत्तरसंयोगः ४, ततो वह्निनोदनजन्यपरमाणुकर्म्मनाशः ५, ततोऽदृष्टवदात्मसंयोगाद् द्रव्यारम्भानुगुणक्रिया ६, ततो विभागः ७, ततः पूर्व्वसंयोगनाशः ८, ततो द्रव्यारम्भकसंयोगः ९, ततो द्व्यणुकम् १०, ततो रक्तादि ११, इति । मध्यमशब्दवदेकस्मादग्निसंयोगान्न रूपनाशरक्तोत्पादौ । तावत्कालमेकस्याग्नेरस्थिरत्वात् । किं च यद्युत्पादको नाशकस्तदा नष्टे रूपादावग्निनाशे नीरूपश्चिरं परमाणुः स्यात् । नाशकश्चेदुत्पादकस्तदा रक्तोत्पत्तौ तदग्निनाशे रक्ततरता न स्यात् । एवं परमाण्वन्तरे कर्म्मचिन्तनात् पञ्चमादिक्षणेऽपि गुणोत्प-

त्तिः । तथाहि । एकत्र परमाणौ कर्म्म,ततो वि-
भागः, तत आरम्भकसंयोगनाशपरमाण्वन्तरक-
र्म्मणी ततस्तु द्व्यणुकनाशः परमाण्वन्तरकर्म्म-
जश्च विभाग इत्येकः कालः १, ततः श्यामादिना-
शः, विभागाच्च पूर्वसंयोगनाश इत्येकः कालः २,
ततो रक्तोत्पत्तिः । द्रव्यारम्भकसंयोगश्चेत्येकः
कालः ३, अथ द्व्यणुकोत्पत्तिः ४, अथ रक्तोत्पत्तिः
५, इति पञ्चक्षणा । द्रव्यनाशसमकालं परमा-
ण्वन्तरे कर्म्मचिन्तनात् षष्ठे गुणोत्पत्तिः । तथा-
हि । परमाणुकर्म्मणा परमाण्वन्तरविभागः, त-
त आरम्भकसंयोगनाशः, अथ द्व्यणुकनाशपर-
माण्वन्तरकर्म्मणी १, अथ श्यामनाशः परमाण्व-
न्तरकर्म्मजो विभागश्च २, ततो रक्तोत्पत्तिः प-
रमाण्वन्तरे पूर्वसंयोगनाशश्च ३, ततः परमाण्व-
न्तरसंयोगः ४, ततो द्व्यणुकोत्पत्तिः ५, अथ रक्तो-
त्पत्तिः ६, इति । एवं श्यामनाशक्षणे परमाण्व-
न्तरे कर्म्मचिन्तनात् सप्तक्षणा । तथाहि । प-
रमाणौ कर्म, ततः परमाण्वन्तरेण विभागः, त-
त आरम्भकसंयोगनाशः, ततो द्व्यणुकनाशः १,

ततः श्यामादिनाशपरमाण्वन्तरकर्मणी २, ततो रक्तोत्पत्तिः परमाण्वन्तरे कर्मजविभागश्च ३, ततः परमाण्वन्तरेणापूर्वसंयोगनाशः ४, ततः परमाण्वन्तरेण संयोगः ५, ततोद्व्यणुकोत्पत्तिः ६, ततो रक्तोत्पत्तिः ७, इति । रक्तोत्पत्तिसमकालं परमाण्वन्तरे कर्मचिन्तनादष्टक्षणा । तथाहि । परमाणौ कर्म, ततः परमाण्वन्तरविभागः, तत आरम्भकसंयोगनाशः, ततो द्व्यणुकनाशः १, ततः श्यामनाशः २, ततो रक्तोत्पत्तिपरमाण्वन्तरकर्मणी ३, ततः परमाण्वन्तरकर्मजविभागः ४, ततः परमाण्वन्तरे पूर्वसंयोगनाशः ५ ततः परमाण्वन्तरसंयोगः ६ ततो द्व्यणुकोत्पत्तिः ७ अथ रक्तोत्पत्तिः ८ इति ।

नैयायिकानां तु नये
द्व्यणुकादावपीष्यते । १०६ ।

नैयायिकानामिति । नैयायिकानां मते द्व्यणुकादाववयविन्यपि पाको भवति । तेषामयमाशयः । अवयविनां सच्छिद्रत्वाद्वह्नेः सूक्ष्मावयवैरन्तःप्रविष्टैरवयवेष्ववष्टब्धेष्वपि पाको न विरु-

ध्यते वैशेषिकमतेऽनन्तावयवितन्नाशकल्पने गौरवात् । इत्थं च सोऽयं घट इत्यादिप्रत्यभिज्ञापि सङ्गच्छते यत्र तु न प्रत्यभिज्ञा तत्रावयविनाशोऽपि स्वीक्रियत इति ।

संख्यां निरूपयितुमाह । गणनेति ।

गणनव्यवहारे तु
हेतुः संख्याऽभिधीयते ।

गणनव्यवहारासाधारणकारणं संख्येत्यर्थः ।

नित्येषु नित्यमेकत्व-
मनित्येऽनित्यमिष्यते । १०७ ।

नित्येष्विति । नित्येषु परमाण्वादिष्वेकत्वं नित्यम्, । अनित्ये घटादावेकत्वमनित्यमित्यर्थः ।

द्वित्वादयः परार्द्धान्ता
अपेक्षाबुद्धिजा मताः ।

द्वित्वादय इति । द्वित्वादयो व्यासज्यवृत्तिसंख्या अपेक्षाबुद्धिजन्याः ।

अनेकाश्रयपर्य्याप्ता
एते तु परिकीर्त्तिताः । १०८ ।

अनेकेति । यद्यपि द्वित्वादिसमवायः प्रत्ये-

कं घटादावपि वर्त्तते । तथाप्येको द्वावितिप्रत्ययाभावादेको न द्वाविति प्रत्ययसद्भावाच्च द्वित्वादीनां पर्य्याप्तिलक्षणः कश्चन सम्बन्धोऽनेकाश्रयोऽभ्युपगम्यते ।

अपेक्षाबुद्धिनाशाच्च
नाशस्तेषां निरूपितः ।

अपेक्षाबुद्धिनाशादिति । प्रथममपेक्षाबुद्धिस्ततो द्वित्वोत्पत्तिस्ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्परूपं ततो द्वित्वत्वविशिष्टप्रत्यक्षमपेक्षाबुद्धिनाशश्च ततो द्वित्वनाश इति । यद्यपि ज्ञानान्तरं द्विक्षणमात्रस्थायि, योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वात् । तथाप्यपेक्षाबुद्धेस्त्रिक्षणस्थायित्वं कल्प्यते, अन्यथा निर्विकल्पकालेऽपेक्षाबुद्धिनाशाऽनन्तरं द्वित्वस्यैव नाशः स्यान्न तु द्वित्वप्रत्यक्षम्, तदानीं विषयाभावात्, विद्यमानस्यैव चक्षुरादिना ज्ञानजननोपगमात् । तस्माद् द्वित्वप्रत्यक्षादिकमपेक्षाबुद्धेर्नाशकं कल्प्यते । न चापेक्षाबुद्धिनाशात्कथं द्वित्वनाश इति वाच्यम् । कालान्तरे द्वि-

त्वप्रत्यक्षाभावादपेक्षाबुद्धिस्तदुत्पादिका तन्ना-
शस्तन्नाशक इति कल्पनात् । अत एव तत्पु-
रुषीयापेक्षाबुद्धिजन्यद्वित्वादिकं तेनैव गृह्यत इ-
ति कल्प्यते । न चापेक्षाबुद्धेर्द्वित्वप्रत्यक्षकारण-
त्वमस्त्विति वाच्यम् । लाघवेन द्वित्वं प्रति कार-
णत्वस्यैवोचितत्वात्, अतीन्द्रिये द्व्यणुकादाव-
पेक्षाबुद्धिर्योगिनाम्, सर्गादिकालीनपरमाण्वा-
दावीश्वरीयापेक्षाबुद्धिर्ब्रह्माण्डान्तरवर्त्तियोगिना-
मपेक्षाबुद्धिर्वा द्वित्वादिकारणमिति ।

अपेक्षाबुद्धिः केत्यत आह । अनेकेति ।

अनेकैकत्वबुद्धिर्या
सापेक्षाबुद्धिरुच्यते ॥ १०९ ॥

अयमेकोऽयमेक इत्याकारिकेत्यर्थः । इदं तु
बोध्यम् । यत्रानियतैकत्वज्ञानं तत्र द्वित्वादिभि-
न्ना बहुत्वसंख्योत्पद्यते यथा सेनावनादाविति
कन्दलीकारः । आचार्य्यास्तु त्रित्वादिकमेव ब-
हुत्वं मन्यन्ते, तथा च त्रित्वत्वादिव्यापिका ब-
हुत्वत्वजातिः । सेनादौ चोत्पन्नेऽपि त्रित्वादौ
त्रित्वत्वाद्यग्रहो दोषादित्थं चेतो बहुतरेयं सेने-

ति प्रतीतिरुपपद्यते, बहुत्वस्य संख्यान्तरत्वे त-
त्तारतम्याभावादित्यवधेयम् ।

परिमाणं निरूपयति । परिमाणमिति ।

परिमाणं भवेन्मान-
व्यवहारस्य कारणम् ।
अणु दीर्घं महद्धूस्व-
मिति तद्भेद ईरितः ॥ ११० ॥

परिमितिव्यवहारासाधारणं कारणं परिमा-
णमित्यर्थः । तच्चतुर्विधम् । अणु महद्दीर्घं ह्रस्वं
च, इदं चातुर्व्विधंं प्रत्यक्षसिद्धम् । तत्राणुत्वह्र-
स्वत्वे महत्त्वदीर्घत्वे च समनियते ।

अनित्ये तदनित्यं स्या-
न्नित्ये नित्यमुदाहृतम् ।
संख्यातः परिमाणाच्च
प्रचयादपि जायते ॥ १११ ॥
अनित्यम्,

तत्परिमाणम् । नित्यमित्यत्र परिमाणमित्य-
नुषज्यते । जायत इत्यत्रापि परिमाणमित्यनुव-
र्त्तते । अनित्यमिति पूर्व्वेणान्वितम् । तथा

चानित्यं परिमाणं सङ्ख्याजन्यं परिमाणजन्यं प्रचयजन्यं चेत्यर्थः ।

तत्र सङ्ख्याजन्यमुदाहरति । द्व्यणुकादाविति ।

ह्यणुकादौ तु संख्याजन्यमुदाहृतम् ।

द्व्यणुकस्य त्रसरेणोश्च परिमाणं प्रति परमाणुपरिमाणं द्व्यणुकपरिमाणं वा न कारणम् । परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वात्, द्व्यणुकादिपरिमाणं तु परमाण्वणुत्वापेक्षया नोत्कृष्टम्, त्रसरेणुपरिमाणं तु न सजातीयमतः परमाणौ द्वित्वसङ्ख्या द्व्यणुकपरिमाणस्य, द्व्यणुके त्रित्वसङ्ख्या च त्रसरेणुपरिमाणस्यासमवायिकारणमित्यर्थः ।

परिमाणजन्यमुदाहरति । परिमाणं घटादाविति ।

परिमाणं घटादौ तु
परिमाणजमुच्यते ॥ ११२ ॥

परिमाणजं कपालादिपरिमाणजन्यम् ।

प्रचयजन्यमुदाहर्तुं प्रचयं निर्वक्ति । प्रचय इति ।

प्रचयः शिथिलाख्यो यः

संयोगस्तेन जन्यते ।

परिमाणं तूलकादौ,

परिमाणं चाश्रयनाशादेव नश्यतीत्याह ।

नाश इति ।

नाशस्त्वाश्रयनाशतः ॥ ११३ ॥

अर्थात् परिमाणस्यैव । न चावयविनाशः कथं परिमाणनाशकः, सत्यप्यवयविनि त्रिचतुरपरमाणुविश्लेषे तदुपचये चावयविनः प्रत्यभिज्ञानेऽपि परिमाणान्तरस्य प्रत्यक्षसिद्धत्वादिति वाच्यम् । परमाणुविश्लेषे द्व्यणुकस्य नाशोऽवश्यमभ्युपेयस्तन्नाशे च त्र्यणुकनाश इत्येवं क्रमेण महावयविनो नाशस्यावश्यकत्वात् । सति च नाशकेऽनभ्युपगममात्रेण नाशस्यापवदितुमशक्यत्वात् । शरीरादाववयोपचयेऽसमवायिकारणनाशस्यावश्यकत्वाद्वयविनाश आवश्यकः । न च पटविनाशेऽपि तन्त्वन्तरसंयोगात् परिमाणाधिक्यं न स्यादिति वाच्यम् । तत्रापि वेमाद्यभिघातेनासमवायिकारणतन्तुसंयोगनाशा-

तु पटनाशस्यावश्यकत्वात् । किं च तन्त्वन्तरस्य तत्पटावयवत्वे पूर्व्वं तत्पट एव न स्यात् तन्त्वन्तररूपकारणाभावात्, तन्त्वन्तरस्यावयवत्वाभावे च न तेन परिमाणाधिक्यं संयुक्तद्रव्यान्तरवत् । तस्मात्तत्र तन्त्वन्तरसंयोगे सति पूर्व्वं पटनाशस्ततः पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्य्यम् । अवयविनः प्रत्यभिज्ञानं तु साजात्येन दीपकलिकादिवत् । न च पूर्व्वतन्तव एव तन्त्वन्तरसहकारात् पूर्व्वपटे सत्येव पटान्तरमारभन्तामिति वाच्यम् । मूर्त्तयोः समानदेशताविरोधात् । एकदा नानाद्रव्यस्य तत्रोपलम्भस्य बाधितत्वाच्च । पूर्व्वद्रव्यस्य प्रतिबन्धकस्य विनाशे द्रव्यान्तरोत्पत्तिरित्यवश्यमभ्युपेयत्वात् ।

पृथक्त्वं निरूपयति । संख्यावदिति ।

संख्यावत्तु पृथक्त्वं स्यात्
पृथक्प्रत्ययकारणम् ।

पृथक्प्रत्ययासाधारणं कारणं पृथक्त्वम् । तत्रित्यतादिकं संख्यावत् । तथाहि । नित्येष्वेकत्वं नित्यमनित्येऽनित्यम् । अनित्यमेकत्वमाश्र-

यद्द्वितीयक्षणे चोत्पद्यते आश्रयनाशान्नश्यति । तथैकपृथक्त्वमपि । द्वित्वादिवच्च द्विपृथक्त्वादिकमपीत्यर्थः ।

नन्वयमस्मात् पृथगित्यादावन्योन्याभावो भासते तत्कथं पृथक्त्वं गुणान्तरं स्वीक्रियते, न चास्तु पृथक्त्वं न त्वन्योन्याभाव इति वाच्यम्, रूपं न घट इति प्रतीत्यनापत्तेः, न हि रूपे घटावधिकं पृथक्त्वं गुणान्तरमस्ति, न वा घटे घटावधिकं पृथक्त्वमस्ति येन परम्परासम्बन्धः कल्प्य इत्यत आह । अन्योन्याभावत इति ।

अन्योन्याभावतो नास्य
चरितार्थत्वमिष्यते ॥ ११४ ॥
अस्मात् पृथगिदं नेति
प्रतीतिर्हि विलक्षणा ।

विलक्षणेति । ननु शब्दवैलक्षण्यमेव न त्वर्थवैलक्षण्यमिति चेन्न । विनार्थभेदं घटात् पृथगितिवद् घटो नेत्यत्रापि पञ्चमी स्यात् । तस्माद् यदर्थकयोगे पञ्चमी सोऽर्थो नञर्थान्योन्याभावतो भिन्नो गुणान्तरं कल्प्यत इति ।

संयोगं निरूपयति । अप्राप्तयोरिति ।

अप्राप्तयोस्तु या प्राप्तिः
सैव संयोग ईरितः ॥ ११५ ॥

तं विभजते । कीर्त्तित इति ।

कीर्त्तितस्त्रिविधस्त्वेष
आद्योऽन्यतरकर्म्मजः ।
तथोभयक्रियाजन्यो
भवेत् संयोगजोऽपरः ॥ ११६ ॥

एष संयोगः ।

आदिमः श्येनशैलादि-
संयोगः परिकीर्त्तितः ।
मेषयोः सन्निपातो यः
स द्वितीय उदाहृतः ॥ ११७ ॥
कपालतरुसंयोगात्
संयोगस्तरुकुम्भयोः ।
तृतीयः स्यात्,

सन्निपातः संयोगः । द्वितीय उभयकर्म्मजः । तृतीय इति । संयोगज इत्यर्थः । तृतीयः स्यादिति च पूर्व्वेणान्वितम् ।

कर्म्मजाऽपि द्विधैव परिकीर्त्तितः ॥११८॥
अभिघातो नोदनं च
शब्दहेतुरिहादिमः ।
शब्दाहेतुर्द्वितीयः स्यात्

आदिमोऽभिघातः । द्वितीयो नोदनाख्यः संयोग इति ।

विभक्तप्रत्ययासाधारणं कारणं विभागं निरूपयति । विभाग इति ।

विभागोऽपि त्रिधा भवेत् ॥ ११९ ॥
एककर्म्मोद्भवस्त्वाद्यो
द्वयकर्म्मोद्भवोऽपरः ।
विभागजस्तृतीयः स्या-
त्तृतीयोऽपि द्विधा भवेत् ॥ १२० ॥
हेतुमात्रविभागोत्थो
हेत्वहेतुविभागजः ।

एककर्म्मेति । उदाहरणं तु श्येनशैलविभागादिकं पूर्ववद्बोध्यम् । तृतीयो विभागजः कारणमात्रविभागजन्यः कारणाकारणविभागजन्यश्चेति । आद्यस्तावत् । यत्र कपाले कर्म्म त-

तः कपालद्वयविभागस्ततो घटारम्भकसंयोग-
नाशस्ततो घटनाशस्ततस्तेनैव कपालविभाग-
न सकर्म्मणः कपालस्य देशान्तरविभागो ज-
न्यते, तत आकाशसंयोगनाशः, तत उत्तरदे-
शसंयोगस्ततः कर्म्मनाश इति । न च तेन क-
र्म्मणैव कथं देशान्तरविभागो न जन्यत इति
वाच्यम् । एकस्य कर्मण आरम्भकसंयोगप्रति-
द्वन्द्विविभागजनकत्वस्यानारम्भकसंयोगप्रतिद्व-
न्द्विविभागजनकत्वस्य च विरोधात् । अन्यथा
विकसत्कमलकुड्मलभङ्गप्रसङ्गात् । तस्माद्य-
दीदमनारम्भकसंयोगप्रतिद्वन्द्विविभागं जनये-
त् तदाऽऽरम्भकसंयोगप्रतिद्वन्द्विविभागं न
जनयेत् । न च कारणविभागेनैव द्रव्यनाशा-
त्पूर्व्वं कुतो देशान्तरविभागो न जन्यत इति
वाच्यम् । आरम्भकसंयोगप्रतिद्वन्द्विविभागव-
तोऽवयवस्य सति द्रव्ये देशान्तरविभागासम्भ-
वात् । द्वितीयस्तावत् । यत्र हस्तक्रियया हस्तत-
रुविभागस्ततः शरीरेऽपि विभक्तप्रत्ययो भव-
ति तत्र च शरीरतरुविभागे हस्तक्रिया न का-

रणं व्यधिकरणत्वात्, शरीरे तु क्रिया नास्ति, अवयविकर्म्मणो यावदवयवकर्म्मनियतत्वात् । अतस्तत्र कारणाकारणविभागेन कार्य्याकार्य्यविभागो जन्यत इति । अत एव विभागो गुणान्तरम्, अन्यथा शरीरे विभक्तप्रत्ययो न स्यात् । अतः संयोगनाशेन विभागो नान्यथासिद्धो भवति ।

परापरव्यवहारासाधारणनिमित्ते परत्वापरत्वे निरूपयति । परत्वं चेति ।

परत्वं चापरत्वं च
द्विविधं परिकीर्त्तितम् ॥ १२१ ॥
दैशिकं कालिकं चेति
मूर्त्त एव तु दैशिकम् ।
परत्वं मूर्त्तसंयोग-
भूयस्त्वज्ञानतो भवेत् ॥ १२२ ॥
अपरत्वं तदल्पत्व-
बुद्धितः स्यादितीरितम् ।

दैशिकमिति । दैशिकपरत्वं बहुतरमूर्त्तसंयोगान्तरितत्वज्ञानादुत्पद्यते । एवं तदल्पीय-

स्त्वज्ञानादपरत्वमुत्पद्यते । अत्रावधित्वार्थं तृतीयापेक्षा, यथा पाटलिपुत्रात् काशीमपेक्ष्य प्रयागः परः, पाटलिपुत्रात् कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति ।

तयोरसमवायी तु
दिक्संयोगस्तदाश्रये । १२३ ।

तयोर्दैशिकपरत्वापरत्वयोः । असमवाय्यसमवायिकारणम् । तदाश्रये दैशिकपरत्वापरत्वाश्रये ।

दिवाकरपरिस्पन्द-
भूयस्त्वज्ञानतो भवेत् ।
परत्वमपरत्वं तु
तदीयाल्पत्वबुद्धितः । १२४

दिवाकरेति । अत्र परत्वमपरत्वं च कालिकं ग्राह्यम् । यस्य सूर्य्यपरिस्पन्दापेक्षया यस्य सूर्य्यपरिस्पन्दोऽधिकः स ज्येष्ठः, यस्य न्यूनः स कनिष्ठः । कालिकपरत्वापरत्वे जन्यद्रव्य एव ।

अत्र त्वसमवायी स्यात्
संयोगः कालपिण्डयोः ।

अत्र कालिकपरत्वापरत्वयोः ।

अपेक्षाबुद्धिनाशेन
नाशस्तेषां निरूपितः । १२५

तेषां कालिकदैशिकपरत्वापरत्वानाम् ।
क्रमप्राप्तां बुद्धिं निरूपयितुमाह । बुद्धेरिति ।

बुद्धेः प्रकारः प्रागेव
प्रायशो विनिरूपितः ।
अथावशिष्टोऽप्यपरः
प्रकारः परिदर्श्यते । १२६ ।
अप्रमा च प्रमा चेति
ज्ञानं द्विविधमिष्यते ।

अप्रमां निरूपयति । तच्छून्य इति ।

तच्छून्ये तन्मतिर्या स्या-
दप्रमा सा निरूपिता । १२७ ।
तत्प्रपञ्चो विपर्य्यासः
संशयोऽपि प्रकीर्त्तितः ।

तदभाववति तत्प्रकारकं ज्ञानं भ्रम इत्यर्थः।
तत्प्रपञ्चोऽप्रमाप्रपञ्चः ।

आद्यो देहेष्वात्मबुद्धिः

शङ्खादौ पीततामतिः । १२८ ।

भवेन्निश्चयरूपा या

आद्य इति । विपर्य्यास इत्यर्थः । शरीरादौ यदात्मत्वप्रकारकं ज्ञानं गौरोऽहमित्याकारकमेवं शङ्खादौ पीतः शङ्ख इत्याकारकं यज् ज्ञानं निश्चयरूपं तद् भ्रम इति ।

संशयोऽथ प्रदर्श्यते ।

किंस्विन्नरो वा स्थाणुर्वे-

त्यादिबुद्धिस्तु संशयः । १२९ ।

किंस्विदिति वितर्के ।

निश्चयस्य लक्षणमाह । तदभावेति ।

तदभावाप्रकाराधी-

स्तत्प्रकारा तु निश्चयः ।

तदभावाप्रकारकत्वे सति तत्प्रकारकं ज्ञानं निश्चयः ।

संशयं लक्षयति । स संशय इति ।

स संशयो मतिर्या स्या-

देकत्राभावभावयोः । १३० ।

एकधर्म्मिकविरुद्धभावाभावप्रकारकं ज्ञानं सं-

शय इत्यर्थः ।

साधारणादिधर्म्मस्य
ज्ञानं संशयकारणम् ।

साधारणेति । उभयसाधारणो यो धर्म्मस्तज्ज्ञानं संशयकारणम् । यथोच्चैस्तरत्वं स्थाणुत्वसाधारणं ज्ञात्वाऽयं स्थाणुर्न वेति सन्दिग्धे । एवमसाधारणधर्मज्ञानमपि कारणम् । यथा शब्दत्वं नित्यानित्यव्यावृत्तं शब्दे गृहीत्वा शब्दो नित्यो न वेति सन्दिग्धे । विप्रतिपत्तिस्तु शब्दो नित्यो न वेत्यादिशब्दात्मिका न संशयकारणम् । शब्दव्याप्तिज्ञानादीनां निश्चयमात्रजनकत्वस्वाभाव्यात् । किं तु तत्र शब्देन कोटिद्वयज्ञानं जन्यते संशयस्तु मानस एवेति । एवं ज्ञाने प्रामाण्यसंशयाद्विषयसंशय इति । एवं व्याप्यसंशयादपि व्यापकसंशय इत्यादिकं बोध्यम् । किं तु संशये धर्म्मिज्ञानं धर्म्मीन्द्रियसन्निकर्षो वा कारणमिति ।

दोषोऽप्रमाया जनकः
प्रमायास्तु गुणो भवेत् ॥ १३१ ॥

दोष इति । अप्रमां प्रति दोषः कारणं प्रमां प्रति गुणः कारणम् । तत्रापि पित्तादिरूपा दोषा अननुगतास्तेषां कारणत्वमन्वयव्यतिरेकाभ्यामेव सिद्धम् । गुणस्य प्रमाजनकत्वं त्वनुमानात् सिद्धम् । यथा प्रमा ज्ञानसाधारणकारणभिन्नकारणजन्या जन्यज्ञानत्वादप्रमावत् । न च दोषाभाव एव कारणमस्त्विति वाच्यम् । पीतः शङ्ख इति ज्ञानस्थले पित्तदोषसत्वाच्छङ्खप्रमानुत्पत्तिप्रसङ्गात् । विनिगमनाविरहादनन्तदोषाभावस्य कारणत्वमपेक्ष्य गुणकारणताया न्याय्यत्वाच्च । न च गुणसत्त्वेऽपि पित्तप्रतिबन्धाच्छङ्खे न श्वैत्यज्ञानमतः पित्तादिदोषाभावानां कारणत्वमवश्यं वाच्यम्, तथा च किं गुणस्य हेतुत्वकल्पनयेति वाच्यम् । तथाऽप्यन्वयव्यतिरेकाभ्यां गुणस्यापि हेतुत्वसिद्धेः । एवं भ्रमं प्रति गुणाभावः कारणमित्यस्यापि सुवचत्वाच्च ।

तत्र दोषाः क इत्याकाङ्क्षायामाह । पित्तेति ।

पित्तदूरत्वादिरूपो

दोषो नानाविधो मतः ।

क्वचित्पीतादिभ्रमे पित्तं दोषः, क्वचिच्चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः, क्वचिच्च वंशोरगभ्रमे मण्डूकवसाञ्जनमित्येवं दोषा भ्रान्तिजनका इत्यर्थः ।

अथ के गुणा इत्याकाङ्क्षायां प्रत्यक्षादौ क्रमशो गुणान् दर्शयति । प्रत्यक्षेति ।

प्रत्यक्षे तु विशेष्येण
विशेषणवता समम् ॥ १३२ ॥
सन्निकर्षो गुणस्तु स्या-
दथ त्वनुमितौ पुनः ।
पक्षे साध्यविशिष्टे च
परामर्शो गुणो भवेत् ॥ १३३ ॥
शक्ये सादृश्यबुद्धिस्तु
भवेदुपमितौ गुणः ।
शाब्दबोधे योग्यताया-
स्तात्पर्य्यस्याथ वा प्रमा ॥ १३४ ॥
गुणः स्यात्,

प्रत्यक्षे विशेषणवद्विशेष्यसन्निकर्षो गुणः,

अनुमितौ साध्यवति साध्यव्याप्यवैशिष्ट्यज्ञानं गुण इति । एवमग्रेऽप्यूह्यः ।

प्रमां निरूपयति । भ्रमभिन्नमिति ।

भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा ।

ननु यत्र शुक्तिरजतयोरिमे रजते इति ज्ञानं जातं तत्र रजतांशेऽपि प्रमा न स्यात्, तज्ज्ञानस्य भ्रमभिन्नत्वाभावादत आह । अथ वेति ।

अथ वा तत्प्रकारं यज्

ज्ञानं तद्वद्विशेष्यकम् ॥ १३५ ॥

तत् प्रमा,

तद्वद्विशेष्यकं तत्प्रकारकं ज्ञानं प्रमेत्यर्थः । अथैवं स्मृतेरपि प्रमात्वं स्यात्ततः किमि चेत्तथा सति तत्कारणस्यापि प्रमाणान्तरत्वं स्यादिति चेन्न । यथार्थानुभवकरणत्वेनैव प्रमाणत्वस्य विवक्षणात्। इदंतु बोध्यम् । येन सम्बन्धेन यद्वत्ता तेन सम्बन्धेन तद्वद्विशेष्यकत्वं तेन सम्बन्धेन तत्प्रकारकत्वं वाच्यम्, तेन कपालादौ संयोगादिना घटादिज्ञाने नातिव्याप्तिः ।

एवं सति निर्विकल्पकं प्रमा न स्यात् त-

स्य सप्रकारकत्वाभावादत आह । न प्रमेति ।

न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम् ।
प्रकारतादिशून्यं हि
सम्बन्धानवगाहि तत् ॥ १३६ ॥

ननु वृक्षे कपिसंयोगज्ञानं भ्रमः स्यात् प्रमा च स्यादिति चेन्न । प्रतियोगिव्यधिकरणसंयोगाभाववति संयोगज्ञानस्य भ्रमत्वात् । न च वृक्षे संयोगाभावावच्छेदकावच्छेदेन संयोगज्ञानं भ्रमो न स्यात् तत्र संयोगाभावस्य प्रतियोगिसमानाधिकरणत्वादिति वाच्यम् । तत्र संयोगाभावावच्छेदकावच्छेदेन संयोगज्ञानस्य भ्रमत्वात् । लक्ष्यस्याननुगमाल्लक्षणाननुगमेऽपि न क्षतिः ।

प्रमात्वं न स्वतो ग्राह्यं
संशयानुपपत्तितः ।

प्रमात्वमिति । मीमांसका हि प्रमात्वं स्वतो ग्राह्यमिति वदन्ति । तत्र गुरूणां मते ज्ञानस्य स्वप्रकाशरूपत्वात् तज्ज्ञानप्रामाण्यं तेनैव गृह्यत इति । भट्टानां मते ज्ञानमतीन्द्रियं

ज्ञानजन्यज्ञातता प्रत्यक्षा तया च ज्ञानमनुमीयते। मुरारिमिश्राणां मतेऽनुव्यवसायेन ज्ञानं गृह्यते। सर्व्वेषामपि मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं गृह्यते विषयनिरूप्यं हि ज्ञानमतो ज्ञानवित्तिवेद्यो विषयस्तन्मतं दूषयति । न स्वतो ग्राह्यमिति । संशयेति। यदि ज्ञानप्रामाण्यं स्वतो ग्राह्यं स्यात् तदाऽनभ्यासदशापन्नज्ञाने तत्संशयो न स्यात्, तत्र हि यदि ज्ञानं ज्ञातं तदा प्रामाण्यं ज्ञातमेवेति कथं संशयः, यदि तु ज्ञानं न ज्ञातं तदा धर्म्मिज्ञानाभावात् कथं संशयस्तस्माज् ज्ञानप्रामाण्यमनुमेयम् । तथाहि । इदं ज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वाद् यन्नैवं तन्नैवं यथाऽप्रमा । इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात् । एवमिदं जलत्वप्रकारकं ज्ञानं प्रमा स्नेहवति जलत्वप्रकारकज्ञानत्वात् । न च हेतुज्ञानं कथं जातमिति वाच्यम् । पृथिवीत्वप्रकारकत्वस्य स्वतो ग्राह्यत्वात्, तत्र गन्धग्रहेण गन्धवद्विशेष्यकत्व-

स्यापि सुग्रहत्वात् । तत्प्रकारकत्वावच्छिन्नत-द्विशेष्यकत्वं परं न गृह्यते संशयानुरोधात् । न च प्रमात्वस्य साध्यस्य प्रसिद्धिः कथमिति वाच्यम् । इदंज्ञानप्रमात्वस्य स्वतो ग्राह्यत्वात् । न च प्रकारभेदेन प्रामाण्यभेदाद् घटत्वप्रकारात्वादेः कथं प्रसिद्धिरिति वाच्यम् । घटत्वप्रकारकत्वस्य स्वविशेष्यकत्वस्य च स्वतो ग्राह्यत्वात् । घटस्य च पूर्व्वमुपस्थितत्वात् । घटविशेष्यकं घटत्वप्रकारकमिति ज्ञाने प्रामाण्यस्य बाधकाभावः । व्यवसायपरं तु प्रामाण्यं न गृह्यते तत्र संशयसामग्रीसत्त्वे संशयस्यैवोपपत्तेः । किं चाभ्यासदशायां तृतीयानुव्यवसायादिना प्रामाण्यस्य स्वत एव ग्रहसम्भवात् प्रथमानुव्यवसायपरं न तद्ग्राहकत्वमिति कल्प्यते संशयानुरोधात् । अथ प्रामाण्यानुमितौ प्रामाण्यग्रहेन तस्य विषयनिश्चयरूपत्वार्थं तत्र प्रामाण्यग्रहो वाच्यः सोऽप्यनुमित्यन्तरेणेति फलमुखी कारणमुखी वा ऽनवस्थेति चेन्न । अगृहीताऽप्रामाण्यग्रहकस्यैव निश्चयरूपत्वात् । यत्र

च प्रामाण्यसंशयस्तत्रैव परं प्रामाण्यानुमितेरपेक्षा, यावदाशङ्कं प्रामाण्यानुमितिरिष्यत एव । सर्व्वत्र तु न संशयः क्वचित्कोट्यनुपस्थितेः, क्वचिद्विशेषदर्शनादितः, क्वचिद्विषयान्तरसञ्चारादिति संक्षेपः । ननु सर्व्वेषां ज्ञानानां यथार्थत्वात् प्रमालक्षणे तद्वद्विशेष्यकत्वं विशेषणं व्यर्थम् । न च रङ्गे रजतार्थिनः प्रवृत्तिर्भ्रमजन्या न स्यात् तव मते भ्रमस्याभावादिति वाच्यम् । तत्र हि दोषाधीनस्य पुरोवर्त्तिनि स्वतन्त्रोपस्थितरजतभेदाग्रहस्य हेतुत्वात् । सत्यरजतस्थले तु विशिष्टज्ञानस्य सत्त्वात् तदेव कारणम्, अस्तु वा तत्रापि भेदाग्रह एव कारणमिति । नव्यान्यथाख्यातिः सम्भवति रजतप्रत्यक्षकारणस्य रजतसन्निकर्षस्याभावाद्रङ्गे रजतबुद्धेरनुपपत्तेरिति चेन्न । सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः कॢप्तत्वादन्यत्रापि तत्कल्पनात् । न च संवादिप्रवृत्तौ तत्कारणं विसंवादिप्रवृत्तौ तु भेदाग्रहः कारणमिति वाच्यम् । लाघवात् प्रवृत्तिमात्रे तस्य हेतुत्व-

कल्पनात् । इत्थं च रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणप्रत्यासत्तिकल्पनेऽपि न क्षतिः फलमुखगौरवस्यादोषत्वात् । किं च रङ्गरजतयोरिमे रजते रङ्गे वेति ज्ञानं यत्र जातं तत्र न कारणबाधोऽपि । अपि च यत्र रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं तत्रोभयत्र युगपत्प्रवृत्तिनिवृत्ती स्याताम् । रङ्गे रङ्गभेदग्रहे रजते रजतभेदग्रहे चान्यथाख्यातिभयात् त्वन्मते दोषादेव रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्वात् । किं चानुमितिं प्रति भेदाग्रहस्य हेतुत्वे जलह्रदे वह्निव्याप्यधूमवद्भेदाग्रहादनुमितिर्निर्बाधा, यदि च विशिष्टज्ञानं कारणं तदाऽयोगोलके वह्निव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितम्, सेयमुभयतःपाशा रज्जुः । इत्थं चान्यथाख्यातौ प्रत्यक्षमेव प्रमाणं रङ्गं रजततया जानामीत्यनुभवादिति संक्षेपः

पूर्वं व्याप्तिरुक्ता तद्ग्रहोपायस्तु न दर्शित इत्यतस्तं दर्शयति । व्यभिचारस्येति ।

व्यभिचारस्याग्रहोऽपि

सहचारग्रहस्तथा ॥ १३७ ॥

हेतुर्व्याप्तिग्रहे,

व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहे कारणमित्यर्थः । व्यभिचारग्रहस्य व्याप्तिग्रहप्रतिबन्धकत्वात् तदभावः कारणम्, एवमन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुता । भूयोदर्शनं तु न कारणम्, व्यभिचारास्फूर्त्तौ सकृद्दर्शनेऽपि क्वचिद्व्याप्तिग्रहात् क्वचिद्व्यभिचारशङ्काविधूननद्वारा भूयोदर्शनमुपयुज्यते ।

यत्र तु भूयोदर्शनादपि शङ्का नापैति तत्र विपक्षबाधकतर्कोऽपेक्षितः । तथाहि । वह्निविरहिण्यपि धूमः स्यादिति यद्याशङ्का भवति तदा सा वह्निधूमयोः कार्य्यकारणभावस्य प्रतिसन्धानान्निवर्त्तते । यद्ययं वह्निमान् न स्यात्तदा धूमवान् न स्यात् कारणं विना कार्य्यानुत्पत्तेः । यदि क्वचित् कारणं विनापि भविष्यत्यहेतुक एव भविष्यतीति तत्राप्याशङ्का भवेत् तदा सा व्याघातादपसरणीया । यदि कारणं विना कार्य्यं स्यात् तदा धूमार्थं वह्नेस्तृणार्थं

भोजनस्य वा नियमत उपादानं तवैव न स्या-
दिति । यत्र स्वत एव शङ्का नावतरति तत्र न
तर्कापेक्षापीति तदिदमुक्तम् । तर्कः क्व चिदिति ।

तर्कः क्व चिच्छङ्कानिवर्त्तकः ।

इदानीं परकीयव्याप्तिग्रहप्रतिबन्धार्थमुपा-
धिं निरूपयति । साध्यस्येति ।

साध्यस्य व्यापको यस्तु
हेतोरव्यापकस्तथा ॥ १३८ ॥
स उपाधिर्भवेत्तस्य
निष्कर्षोऽयं प्रदर्श्यते ।

साध्यत्वाभिमतव्यापकत्वे सति साधनत्वा-
भिमताव्यापक इत्यर्थः । ननु श्यामो मित्रातन-
यत्वादित्यत्र शाकपाकजत्वं नोपाधिः स्यात्
तस्य साध्यव्यापकत्वाभावात्, श्यामत्वस्य को-
किलादावपि सत्त्वात, एवं वायुः प्रत्यक्षः स्प-
र्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वं नोपाधिः स्यात्
प्रत्यक्षत्वस्यात्मादिषु सत्त्वात् तत्र च रूपाभा-
वात्, एवं ध्वंसो विनाशी जन्यत्वादित्यत्र भा-
वत्वं नोपाधिः स्याद्विनाशित्वस्य प्रागभावे स-

त्वात् तत्र च भावत्वाभावादिति चेन्न । यद्धर्म्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्म्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थे तात्पर्य्यात् । मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजत्वम् । तदवच्छिन्नसाधनाव्यापकं च । एवं पक्षधर्मबहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य व्यापकमुद्भूतरूपवत्त्वं बहिर्द्रव्यत्वावच्छिन्नसाधनस्याव्यापकं च । एवं ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नसाध्यव्यापकं भावत्वम् । एवं श्यामो मित्रातनयत्वादित्यादावपि मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजत्वम् । सद्धेतोस्त्वेतादृशो धर्म्मो नास्ति यदवच्छिन्नस्य साध्यस्य व्यापकं तदवच्छिन्नस्य साधनस्याव्यापकं किं चित् स्यात् । व्यभिचारिणि त्वन्तत उपाध्यधिकरणं यत्साध्याधिकरणं यच्चोपाधिशून्यं साध्यव्यभिचारनिरूपकमधिकरणं तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वं साधनस्य चाव्यापकत्वमुपाधेः सम्भवतीति ।

अत एव लक्ष्यमपि रूपमेतदनुसारेण दर्शयति । सर्व्वे इति ।

सर्व्वे साध्यसमानाधि-
करणाः स्युरुपाधयः ॥ १३९ ॥
हेतोरेकाश्रये येषां
स्वसाध्यव्यभिचारिता ।

स्वसाध्येति । स्वमुपाधिः स्वं च साध्यं च स्वसाध्ये तयोर्व्यभिचारितेत्यर्थः ।

उपाधेर्दूषकताबीजमाह । व्यभिचारस्येति ।

व्यभिचारस्यानुमान-
मुपाधेस्तु प्रयोजनम् ॥ १४० ॥

उपाधिव्यभिचारेण साध्यव्यभिचारानुमानमुपाधेः प्रयोजनमित्यर्थः । तथाहि । यत्र शुद्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनोपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् । यथा धूमवान् वह्नेरित्यादौ वह्निर्धूमव्यभिचार्य्यार्द्रेन्धनव्यभिचारित्वादिति । व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात् । यत्र तु किञ्चिद्धर्म्मावच्छिन्नसाध्यव्यापक उपाधिस्तत्र त-

र्द्धर्म्मवत्युपाधिव्यभिचारेण साध्यव्यभिचारा-
नुमानम् । यथा श्यामो मित्रातनयत्वादित्य-
त्र मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रात-
नये शाकपाकजत्वव्यभिचारित्वादिति । बा-
धानुन्नीतपक्षेतरस्तु साध्यव्यापकताग्राहकप्र-
माणाभावात् स्वव्याघातकत्वाच्च नोपाधिः ।
बाधोन्नीतस्तु पक्षेतर उपाधिर्भवत्येव, यथा
वह्निरनुष्णः कृतकत्वादित्यादौ प्रत्यक्षेण व-
ह्नेरुष्णत्वग्रहे वह्नीतरत्वमुपाधिः । यत्र साध्य-
व्यापकत्वादिकं सन्दिह्यते स सन्दिग्धोपाधिः
पक्षेतरस्तु सन्दिग्धोपाधिरपि नोद्भावनीयः
कथकसम्प्रदायानुरोधादिति । के चित्तु सत्प्रति-
पक्षोत्थापनमुपाधिफलम् । तथाहि । अयोगो-
लकं धूमवद्वह्नेरित्यादावयोगोलकं धूमाभाववत्
दार्द्रेन्धनाभावादिति सत्प्रतिपक्षसम्भवात् । इ-
त्थं च साधनव्यापकोपि क्व चिदुपाधिर्यथा कर-
का पृथिवी कठिनसंयोगवत्त्वादित्यादावनुष्णा-
शीतस्पर्शवत्त्वम् । न चात्र स्वरूपासिद्धिरेव दू-
षणमिति वाच्यम् । सर्व्वत्रोपाधेर्दूषणान्तरसा-

कुर्य्यादत्र च साध्यव्यापकः पक्षावृत्तिरुपाधिरि-
ति वदन्ति ।

शब्दोपमानयोर्नैव
पृथक् प्रामाण्यमिष्यते ।
अनुमानगतार्थत्वा-
दिति वैशेषिकं मतम् ॥ १४१ ॥

शब्दोपमानयोरिति । वैशेषिकाणां मते प्र-
त्यक्षमनुमानं च प्रमाणम्, शब्दोपमानयोस्त्व-
नुमानविधयैव प्रामाण्यम् । तथाहि । दण्डे-
न गामभ्याजेत्यादिपदानि वैदिकपदानि वा
तात्पर्य्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्व्वकाणि
आकाङ्क्षादिमत्पदकदम्बत्वाद्‌ घटमानयेति-
पदकदम्बवत्, यद्वैते पदार्था मिथः संसर्गव-
न्तो योग्यतादिमत्पदोपस्थापितत्वात् तादृश-
पदार्थवत्, दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्य-
सिद्धिरिति । एवं गवयव्यक्तिप्रत्यक्षानन्तरं ग-
वयपदं गवयत्वप्रवृत्तिनिमित्तकमसति वृत्त्य-
न्तरे वृद्धैस्तत्र प्रयुज्यमानत्वाद्‌ यथा गोपदं गो-
त्वप्रवृत्तिनिमित्तकम्, यद्वा गवयपदं सप्रवृत्ति-

निमित्तकं साधुपदत्वादित्यनुमानेन पक्षधर्म्म-
ताबलाद्गवयत्वप्रवृत्तिनिमित्तकत्वं सिद्ध्यति।
तन्मतं दूषयति। तन्न सम्यगिति।

तन्न सम्यग्विना व्याप्ति-
बोधं शाब्दादिबोधतः।

विना व्याप्तिज्ञानं शब्दादितो बोधस्यानुभ-
विकत्वात्। नहि सर्व्वत्र शब्दश्रवणादनन्तरं
व्याप्तिज्ञाने मानमस्तीति। किं च सर्व्वत्र शा-
ब्दस्थले यदि व्याप्तिज्ञानं कल्प्यते तदा सर्व्व-
त्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्दबोध
एव किं न स्वीक्रियत इति।

त्रैविध्यमनुमानस्य
केवलान्वयिभेदतः॥ १४२॥
द्वैविध्यं तु भवेद्व्याप्ते-
रन्वयव्यतिरेकतः।
अन्वयव्याप्तिरुक्तैव
व्यतिरेकादथोच्यते॥ १४३॥

त्रैविध्यमिति। अनुमानं हि त्रिविधं केव-
लान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात्।

तत्रासद्विपक्षः केवलान्वयी, यथा ज्ञेयमभिधेयत्वादित्यादौ, तत्र हि सर्व्वस्यैव ज्ञेयत्वाद् विपक्षासत्त्वम् । ननु सर्व्वेषां धर्म्माणां व्यावृत्तत्वात् केवलान्वय्यसिद्धिरिति चेन्न । व्यावृत्तत्वस्य सर्व्वसाधारण्ये तस्यैव केवलान्वयित्वात् । किं च वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् । तच्च गगनाभावादौ प्रसिद्धम् । असत्सपक्षः केवलव्यतिरेकी, यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ । तत्र हि जलादित्रयोदशभेदस्य पूर्व्वमनिश्चिततया निश्चितसाध्यवतः सपक्षस्याभाव इति । सत्सपक्षविपक्षोऽन्वयव्यतिरेकी, यथा वह्निमान् धूमादित्यादौ तत्र सपक्षस्य महानसादेर्विपक्षस्य जलह्रदादेश्च सत्त्वादिति ।

तत्र व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणं तदर्थं व्यतिरेकव्याप्तिं निर्व्वक्ति । साध्याभावव्यापकत्वमिति ।

साध्याभावव्यापकत्वं
हेत्वभावस्य यद् भवेत् ।

साध्याभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः । अत्रेदं बोध्यम् । यत्संबन्धेन यदवच्छिन्नं प्रति येन सम्बन्धेन येन रूपेण व्यापकता गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्म्मावच्छिन्नाभाववत्ताज्ञानात् तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्म्मावच्छिन्नाभावस्य सिद्धिः । इत्थं च यत्र विशेषणतादिसम्बन्धेनेतरत्वव्यापकत्वं गन्धाभावे गृह्यते तत्र गन्धाभावाभावेनेतरत्वात्यन्ताभावः सिध्यति । यत्र तु तादात्म्यसम्बन्धेनेतरव्यापकता गृह्यते तत्र तादात्म्यसम्बन्धेनेतरस्याभावः सिध्यति स एवान्योन्याभावः । एवं यत्र संयोगसम्बन्धेन धूमं प्रति संयोगसम्बन्धेन वह्नेर्व्यापकता गृह्यते तत्र संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेन जलह्रदे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावः सिध्यति । अत्र च व्यतिरेकव्याप्तिग्रहे व्यतिरेकसहचारज्ञानं कारणम् । केचित्तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते न तु व्यतिरेकव्याप्तिज्ञानं कारणम् । यत्र व्यतिरेकसहचाराद्व्याप्तिग्रह-

स्तत्र व्यतिरेकीत्युच्यते साध्यप्रसिद्धिस्तु घटादावेव जायतां पश्चात् पृथिवीत्यवच्छेदेन साध्यतेति वदन्ति ।

अर्थापत्तेस्तु नैवेह
प्रमाणान्तरतेष्यते ॥ १४४ ॥
व्यतिरेकव्याप्तिबुद्ध्या
चरितार्था हि सा यतः ।

अर्थापत्तेरित्यादि । अर्थापत्तिं प्रमाणान्तरं मन्यन्ते के चन । तथाहि यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतं जीविनो गृहासत्त्वं च प्रत्यक्षादवगतं तत्र शतवर्षजीवित्वान्यथानुपपत्त्या बहिःसत्त्वं कल्प्यते । तदनुमानेन गतार्थत्वान्नेष्यते । तथाहि । यत्र जीवितत्वस्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधाद्बहिःसत्त्वमनुमितौ भासते । एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमाद्भोजनं सिध्यति । दिवाभोजनबाधे च रात्रिभोजनं सिध्यति । अभावप्रत्यक्षस्यानुभविकत्वादनुपल-

म्भोऽपि न प्रमाणान्तरम् । किं चानुपलम्भस्या-
ज्ञातस्य हेतुत्वे ज्ञानाकरणकत्वात् प्रत्यक्षत्वं
ज्ञातस्य हेतुत्वे तु तत्राप्यनुपलम्भान्तरापेक्षेत्य-
नवस्था । एवं चेष्टापि न प्रमाणान्तरं तस्याः सङ्केत-
ग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वा-
च्छब्द एवान्तर्भावात् । यत्तु वयःप्रमादिग्रहस्त-
त्रानुमितिरेवेति ।

सुखं निरूपयति । सुखं तु जगतामेवेति ।

सुखं तु जगतामेव,
काम्यं धर्म्मेण जन्यते ॥

काम्यमभिलाषाविषयः । धर्म्मेति । धर्म्मत्वेन
सुखत्वेन कार्य्यकारणभाव इत्यर्थः ।

दुःखं निरूपयति अधर्म्मेति ।

अधर्म्मजन्यं दुःखं स्यात्
प्रतिकूलं सचेतसाम् । १४५ ।

अधर्म्मत्वेन दुःखत्वेन कार्य्यकारणभाव इ-
त्यर्थः । प्रतिकूलमिति । दुखत्वज्ञानादेव सर्व्वेषां
स्वाभाविकद्वेषविषय इत्यर्थः ।

इच्छां निरूपयति । निर्दुःखत्व इति ।

निर्दुःखत्वे सुखे चेच्छा
तज्ज्ञानादेव जायते ।
इच्छा तु तदुपाये स्या-
दिष्टोपायत्वधीर्यदि । १४६ ।

इच्छा हि फलविषयिणी, उपायविषयिणी च, फलं तु सुखं दुःखाभावश्च, तत्र फलेच्छां प्रति फलज्ञानं कारणम् । अत एव स्वतः पुरुषार्थः सम्भवति, यज्ज्ञानं सत् स्ववृत्तितयेष्यते स पुरुषार्थ इति तल्लक्षणात् । इतरेच्छानधीनेच्छाविषयत्वं फलितोऽर्थः । उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणम् ।

चिकीर्षा कृतिसाध्यत्व-
प्रकारेच्छा च या भवेत् ।
तद्धेतुः कृतिसाध्येष्ट-
साधनत्वमतिर्भवेत् । १४७ ।

चिकीर्षेति । कृतिसाध्यत्वप्रकारिका कृतिसाध्यविषयिणीच्छा चिकीर्षा । पाकं कृत्या साधयामीति तदनुभवात् । चिकीर्षां प्रति कृतिसाध्यताज्ञानमिष्टसाधनताज्ञानं च कारणम् ।

अत एव वृष्ट्यां कृतिसाध्यताज्ञानाभावान्न चि-
कीर्षा ।

बलवद्द्विष्टहेतुत्व-
मतिः स्यात् प्रतिबन्धिका ।

बलवदिति । बलवद्द्विष्टसाधनताज्ञानं तत्र
प्रतिबन्धकमतो मधुविषसंपृक्तान्नभोजने न चि-
कीर्षा । बलवद्द्वेषः । प्रतिबन्धक इत्यन्ये ।

तदहेतुत्वबुद्धेस्तु
हेतुत्वं कस्य चिन्मते । १४८ ।

तदहेतुत्वेति । बलवदनिष्टाजनकत्वज्ञानं
कारणमित्यर्थः । कृतिसाध्यताज्ञानादिमतो ब-
लवदनिष्टसाधनताज्ञानशून्यस्य बलवदनिष्टाज-
नकत्वज्ञानं विनापि चिकीर्षायां विलम्बाभावात्
कस्य चिन्मत इत्यस्वरसो दर्शितः ।

द्वेषं निरूपयति । द्विष्टसाधनतेति ।

द्विष्टसाधनताबुद्धि-
र्भवेद् द्वेषस्य कारणम् ।

दुःखोपायविषयकं द्वेषं प्रति द्विष्टसाधन-
ताज्ञानं कारणमित्यर्थः । बलवदिष्टसाधनताज्ञानं

च प्रतिबन्धकं तेन नान्तरीयकदुःखजनके पाकादौ न द्वेषः ।

यत्नं निरूपयति । प्रवृत्तिश्चेति ।

प्रवृत्तिश्च निवृत्तिश्च
तथा जीवनकारणम् । १४९ ।
एवं प्रयत्नत्रैविध्यं
तान्त्रिकैः परिदर्शितम् ।

प्रवृत्तिनिवृत्तिजीवनयोनियत्नभेदात् प्रयत्नस्त्रिविध इत्यर्थः ।

चिकीर्षा कृतिसाध्येष्ट-
साधनत्वमतिस्तथा । १५० ।
उपादानस्य चाध्यक्षं
प्रवृत्तौ जनकं भवेत् ।

चिकीर्षेत्यादि । मधुविषसंपृक्तान्नभोजनादौ बलवदनिष्टानुबन्धित्वेन चिकीर्षाभावान्न प्रवृत्तिरिति भावः । कृतिसाध्यताज्ञानादिवद्बलवदनिष्टाननुबन्धित्वज्ञानमपि स्वतन्त्रान्वयव्यतिरेकात् प्रवृत्तौ कारणमित्यपि वदन्ति । कार्य्यताज्ञानं प्रवर्त्तकमिति गुरवः । तथाहि । ज्ञानेन

प्रवृत्तौ जननीयायां चिकीर्षातिरिक्तं नापेक्षितमस्ति, सा च कृतिसाध्यताज्ञानसाध्या, इच्छायाः स्वप्रकारप्रकारकधीसाध्यत्वनियमात् । चिकीर्षा हि कृतिसाध्यत्वप्रकारिकेच्छा तत्र कृतिसाध्यत्वं प्रकारस्तत्प्रकारकज्ञानं चिकीर्षायां तद्द्वारा प्रवृत्तौ च हेतुः, न त्विष्टसाधनताज्ञानं तत्र हेतुः कृत्यसाध्येऽपि प्रवृत्त्यापत्तेः । ननु कृत्यसाध्यताज्ञानं प्रतिबन्धकमिति चेन्न । तदभावापेक्षया कृतिसाध्यताज्ञानस्य लघुत्वात् । न च द्वयोरपि हेतुत्वम् । गौरवात् । ननु त्वन्मतेऽपि मधुविषसंपृक्तान्नभोजने चैत्यवन्दने च प्रवृत्त्यापत्तिः कार्य्यताज्ञानसत्त्वादिति चेन्न । स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्य्यताज्ञानस्य प्रवर्त्तकत्वात् । काम्ये हि यागपाकादौ कामना स्वविशेषणम् । ततश्च बलवदनिष्टाननुबन्धिकाम्यसाधनताज्ञानेन कार्य्यताज्ञानम् । ततः प्रवृत्तिः । तृप्तश्च भोजने न प्रवर्त्तते तदानीं कामनायाः पुरुषविशेषणस्याभावात् । नित्ये च शौचादिकं पुरुषविशेषणं तेन शौचादिज्ञानाधी-

नकृतिसाध्यताज्ञानात्तत्र प्रवृत्तिः । ननु तदपेक्षया लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्य्यताज्ञानमेव हेतुरस्तु, बलवदनिष्टाननुबन्धित्वं चेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वम्, बलवद्द्विष्टविषयकदुःखाजनकत्वं वेति चेन्न । इष्टसाधनत्वकृतिसाध्यत्वयोर्युगपज् ज्ञातुमशक्यत्वात् । साध्यत्वसाधनत्वयोर्विरोधात् । असिद्धस्य तु साध्यत्वं सिद्धस्य च साधनत्वम् । न चैकमेकेनैकदा सिद्धमसिद्धं च ज्ञायते, तस्मात् कालभेदादुभयं ज्ञायत इति । मैवम् । लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञानस्य हेतुत्वात् । न च साध्यत्वसाधनत्वयोर्विरोधः । यदा कदा चित् साध्यत्वसाधनत्वयोरविरोधादेकदा साध्यत्वसाधनत्वयोश्च ज्ञानात् । नवीनास्तु ममेदं कृतिसाध्यमितिज्ञानं नप्रवर्त्तकमनागतेष्टस्य ज्ञातुमशक्यत्वात् । किं तु यादृशस्य पुंसः कृतिसाध्यं यद्दृष्टं तादृशत्वं स्वस्य प्रतिसन्धाय तत्र प्रवर्त्तते तेनौदनकामस्य तत्साधनताज्ञान-

वतस्तदुपकरणवतः पाकः कृतिसाध्यस्ताहृशश्चा-
हमिति प्रतिसन्धाय पाके प्रवृत्तिरित्याहुस्त-
न्न । स्वकल्पितलिप्यादिप्रवृत्तौ यौवने कामोद्रे-
कादिना सम्भोगादौ च तदभावात् । इदं तु बो-
ध्यम् । तदानीन्तनेष्टसाधनत्वादिज्ञानं प्रवर्त्तकं
तेन भाविगौवराज्ये बालस्य न प्रवृत्तिस्तदानीं
कृतिसाध्यत्वाज्ञानात् । एवं तृप्तो भोजने न
प्रवर्त्तते तदानीमिष्टसाधनत्वाज्ञानात् । प्रवर्त्तते
च रोषदूषितचित्तो विषादिभक्षणे तदानीं बल-
वदनिष्टाननुबन्धित्वज्ञानात् । न चास्तिकस्या-
गम्यागमनशत्रुबधादिप्रवृत्तौ कथं बलवदनि-
ष्टाननुबन्धित्वबुद्धिर्नरकसाधनत्वज्ञानादिति वा-
च्यम् । उत्कटरागादिना नरकसाधनताधीनिरो-
धनात् । वृष्ट्यादौ तु कृतिसाध्यताज्ञानाभावान्न
चिकीर्षाप्रवृत्ती किं त्विष्टसाधनताज्ञानादिच्छा-
मात्रं कृतिश्च प्रवृत्तिरूपा बोध्या । तेन जीवन-
योनियत्नसाध्ये प्राणपञ्चकसञ्चारे न प्रवृत्तिः ।
इत्थं च प्रवर्त्तकत्वानुरोधाद्विधेरपीष्टसाधनता-
दिकमेवार्थः । इत्थं च विश्वजिता यजेतेत्यादौ

यत्र फलं न श्रूयते तत्रापि स्वर्गः फलं कल्प्यते। नन्वहरहः सन्ध्यामुपासीतेत्यादाविष्टानुत्पत्तेः प्रवृत्तिः कथम्, न चार्थवादिकं ब्रह्मलोकादि प्रत्यवायाभावो वा फलमिति वाच्यम्। तथा सति काम्यत्वे नित्यत्वानापत्तेः कामनाभावेऽकरणापत्तेश्च, इत्थं च फलश्रुतिस्तत्रार्थवादमात्रमिति चेन्न। ग्रहणश्राद्धादौ नित्यत्वनैमित्तिकत्वयोरिव भरणीश्राद्धे काम्यत्वनैमित्तिकत्वयोरिव, नित्यत्वकाम्यत्वयोरप्यविरोधात्। न च कामनाभावेऽकरणापत्तिः। त्रिकालस्तवन पाठादाविव कामनासद्भावस्यैव कल्पनात्। ननु वेदबोधितकार्य्यताज्ञानात् प्रवृत्तिः सम्भवतीति चेन्न। इष्टसाधनत्वमविज्ञाय तादृशकार्य्यताज्ञानसहस्रेणापि प्रवृत्तेरसम्भवात्। यदपि परवृद्धापूर्व्वं फलमिति। तदपि न। कामनाभावेऽकरणतापत्तेस्तौल्यात्। कामनाकल्पने त्वार्थवादिकफलमेव रात्रिसत्रन्यायात् कल्प्यतामन्यथा प्रवृत्त्यनुपपत्तेः, तेनानुत्पत्तिमेवान्ये प्रत्यवायस्य मन्वते। एवं "सन्ध्यामुपासते ये तु

सततं शंसितव्रताः विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्" । एवं "दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावह,,न्नित्यादिकमेव फलमस्तु । न च पितृप्रीतिः कथं फलं व्यधिकरणत्वादिति वाच्यम् । गयाश्राद्धादाविवोद्देश्यत्वसम्बन्धेनैव फलजनकत्वस्य क्वचित्कल्पनात् । अत एवोक्तं शास्त्रदर्शितफलमनुष्ठानकर्त्तरीत्युत्सर्ग इति । पितृणां मुक्तत्वे तु स्वस्य स्वर्गफलम्,यावन्नित्यनैमित्तिकानुष्ठानस्य सामान्यतः स्वर्गफलकल्पनात् । पराडापूर्व्वार्थं प्रवृत्तिश्च न सम्भवति । न हि तत्सुखदुःखाभाववत् स्वतः पुरुषार्थों न वा तत्साधनं प्रत्यवायानुत्पत्तौ । कथं प्रवृत्तिरिति चेदित्थम् । यथा हि नित्ये कृते प्रत्यवायाभावस्तिष्ठति तदभावे तदभावः । एवं प्रत्यवायोभावस्य सत्त्वे दुखःप्रागभावसत्त्वं तदभावे तदभाव इति योगक्षेमसाधारणकारणतया दुःखप्रागभावं प्रत्यपि सुवचत्वात् । एवमेव प्रायश्चित्तस्यापि दुःखप्रागभावहेतुत्वमिति । ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थे कथं नञर्थान्वयः,

इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बोधयितुमशक्यत्वादिति चेन्न । तत्र बाधादिष्टसाधनत्वं कृतिसाध्यत्वं च न विध्यर्थः किं तु बलवदनिष्टाननुबन्धित्वमात्रं तदभावश्च नञा बोध्यते, अथ वा बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थस्तदभावश्च नञा बोध्यमानो विशिष्टाभावो विशेष्यवति विशेषणाभावे विश्राम्यति । ननु श्येनेनाभिचरन् यजेतेत्यत्र कथं बलवदनिष्टाननुबन्धित्वमर्थः श्येनस्य मरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात्, न च वैधत्वान्न निषेध इति वाच्यम्, अभिचारे प्रायश्चित्तोपदेशात् । न च मरणानुकूलव्यापारमात्रं यदि हिंसा तदा खड्गकारस्य कूपकर्त्तुश्च हिंसकत्वापत्तिः, गललग्नान्नभक्षणजन्यमरणे स्वात्मवधित्वापत्तिश्चेति वाच्यम्, मरणोद्देश्यकत्वस्यापि विशेषणत्वात्, अन्योद्देश्यकक्षिप्तनाराचहतब्राह्मणस्य तु वाचनिकं प्रायश्चित्तमिति चेन्न । श्येनवारणायादृष्टाद्वारकत्वेन विशेषणात्, । अत एव काशीमरणाद्यर्थकृतशिव-

पूजादेरपि न हिंसात्वम् । न च साक्षान्मरणजनकस्यैव हिंसात्वं श्येनस्तु न तथा किं तु तज्जन्यापूर्व्वमिति वाच्यम् । खड्गाघातेन ब्राह्मणे व्रणपाकपरम्परया मृते हिंसात्वानापत्तेः । केचित्तु श्येनस्य हिंसा फलं न तु मरणं तेन श्येनजन्यखड्गाघातादिरूपा हिंसाऽभिचारपदार्थस्तस्य च पापजनकत्वमतः श्येनस्य वैधत्वात् पापाजनकत्वेऽप्यग्रिमपापं प्रतिसन्धाय सन्तो न प्रवर्त्तन्त इत्याहुः । आचार्य्यास्तु आप्ताभिप्रायो विध्यर्थः पाकं कुर्य्या इत्यादावाज्ञादिरूपेच्छावाचित्ववल्लिङ्गात्रस्येच्छावाचित्वं लाघवात् । एवं च स्वर्गकामो यजेतेत्यादौ यागः स्वर्गकामकृतिसाध्यतयाप्तेष्ट इत्यर्थः । ततश्चाप्तेष्टत्वेनेष्टसाधनत्वादिकमनुमाय प्रवर्त्तते । कलञ्जभक्षणादौ तदभावान्न प्रवर्त्तते । यस्तु वेदे पौरुषेयत्वं नाभ्युपैति तं प्रति विधिरेव तावद्गर्भ इव श्रुतिकुमार्य्याः पुंयोगे मानम् । न च कर्त्रस्मरणं बाधकम् । कपिलकणादादिकमारभ्याद्यपर्य्यन्तं कर्त्तृस्मरणस्यैव प्रतीयमानत्वात् । अन्य-

था स्मृतीनामप्यकर्त्तृकत्वापत्तेस्तत्रैव कर्त्तृस्मरणमस्तीति चेद्वेदेऽपि छन्दांसि जज्ञिरे तस्मादित्यादि कर्त्तृस्मरणमस्त्येव । एवं "प्रति मन्वन्तरं चैषा श्रुतिरन्या विधीयत" इत्यपि द्रष्टव्यम् । स्वयम्भूरेष भगवान् वेदो गीतस्त्वया पुरा । शिवाद्या ऋषिपर्य्यन्ताः स्मर्त्तारोऽस्य न कारका इति तु वेदस्य स्तुतिमात्रम् । न च पौरुषेयत्वे भ्रमादिसंभवादप्रामाण्यं स्यादिति वाच्यम् । नित्यसर्व्वज्ञत्वेन निर्दोषत्वात् । अत एव पुरुषान्तरस्य भ्रमादिसम्भवान्न कपिलादेः कर्त्तृत्वं वेदस्य । किं च वर्णानामेवानित्यत्वस्य वक्ष्यमाणत्वात् सुतरां तत्सन्दर्भस्य वेदस्यानित्यत्वमिति ।

उपादानस्येति । उपादानस्य समवायिकारणस्याध्यक्षं प्रत्यक्षं च प्रवृत्तौ कारणमिति ।

निवृत्तिस्तु भवेद्द्वेषाद्
द्विष्टसाधनताधियः । १५१ ।

निवृत्तिरिति । द्विष्टसाधनताज्ञानस्य दुःखसाधनविषयकनिवृत्तिं प्रति जनकत्वमन्वयव्य-

तिरेकादवधारितमिति भावः ।

यत्नो जीवनयोनिस्तु
सर्वदाऽतीन्द्रियो भवेत् ।
शरीरे प्राणसञ्चारे
कारणं स प्रकीर्त्तितः । १५२ ।

यत्न इति । जीवनयोनियत्नो यावज्जीवनमनुवर्त्तते स चातीन्द्रियस्तत्र प्रमाणमाह । शरीर इति । प्राणसञ्चारो ह्यधिकश्वासादिः प्रयत्नसाध्यः । इत्थं च प्राणसञ्चारस्य यत्नसाध्यत्वानुमानात् प्रत्यक्षयत्नस्य बाधाच्चातीन्द्रिययत्नसिद्धिः स एव जीवनयोनिः प्रयत्नः ।

गुरुत्वं निरूपयति । अतीन्द्रियमिति ।

अतीन्द्रियं गुरुत्वं स्यात्
पृथिव्यादिद्वये तु तत् ।
अनित्ये तदनित्यं स्या-
न्नित्ये नित्यमुदाहृतम् । १५३ ।
तदेवासमवायि स्यात्
पतनाख्ये तु कर्म्मणि ।

अनित्ये द्व्यणुकादौ तद्गुरुत्वमनित्यं नि-

त्ये परमाणौ नित्यं गुरुत्वमित्यनुवर्त्तते । त-
द्गुरुत्वमसमवाय्यसमवायिकारणम् । पतन आ-
द्यपतन इत्यर्थः ।

द्रवत्वं निरूपयति । सांसिद्धिकमिति ।

सांसिद्धिकं द्रवत्वं स्या-
न्नैमित्तिकमथापरम् । १५४ ।
सांसिद्धिकं तु सलिले
द्वितीयं क्षितितेजसोः ।
परमाणौ जले नित्य-
मन्यत्रानित्यमिष्यते । १५५ ।
नैमित्तिकं वह्नियोगात्
तपनीयघृतादिषु ।
द्रवत्वं स्यन्दने हेतु-
र्निमित्तं संग्रहे तु तत् । १५६ ।

द्रवत्वं द्विविधं सांसिद्धिकं नैमितिकं च । प-
रमाणाविति । जलपरमाणौ द्रवत्वं नित्यमन्य-
त्र पृथिवीपरमाण्वादौ जलद्व्यणुकादौ च द्रवत्व-
मनित्यं कुत्र चित्तेजसि कुत्र चित्पृथिव्यां च नै-
मित्तिकं द्रवत्वम् । तत्र कोवा नैमित्तिकार्थस्तह-

र्शयति । नैमित्तिकमिति । वह्नीतिपदं तेजोर्थकम् । तथा च तेजःसंयोगजन्यं नैमित्तिकं द्रवत्वम् । तच्च सुवर्णादिरूपे तेजसि घृतजतुप्रभृतिपृथिव्यां च वर्त्तत इत्यर्थः । द्रवत्वं स्यन्दन इति । असमवायिकारणमित्यर्थः । संग्रहे सक्तुकादिसंयोगविशेषे । तद् द्रवत्वम् स्नेहसहितमिति बोद्धव्यम् । तेन द्रुतसुवर्णादीनां न संग्रहः ।

स्नेहं निरूपयति । स्नेहो जल इति ।

स्नेहो जले स नित्योऽणा-
वनित्योऽवयविन्यसौ ।
तैलान्तरे तत्प्रकर्षा-
द्दहनस्यानुकूलता । १५७ ।

जल एवेत्यर्थः । असौ स्नेहः । ननु पृथिव्यामपि तैले स्नेह उपलभ्यते न चासौ जलीयस्तथा सति दहनप्रातिकूल्यं स्यादत आह । तैलान्तर इति । तत्प्रकर्षात् स्नेहप्रकर्षात् तैल उपलभ्यमानः स्नेहोऽपि जलीय एव तस्य प्रकृष्टत्वादग्नेरानकूल्यम्, अपकृष्टस्नेहं हि जलं वह्निं नाशयतीति भावः ।

संस्कारं निरूपयति । संस्कारेति ।

संस्कारभेदो वेगोऽथ
स्थितिस्थापकभावने ।
मूर्त्तमात्रे तु वेगः स्यात्
कर्म्मजो वेगजः क्व चित् । १५८ ।
भावनाख्यस्तु संस्कारो
जीववृत्तिरतीन्द्रियः ।
उपेक्षानात्मकस्तस्य
निश्चयः कारणं भवेत् । १६० ।

वेगस्थितिस्थापकभावनाभेदात् संस्कार-स्त्रिविध इत्यर्थः । मूर्त्तमात्र इति । कर्म्मजवेग-जभेदाद्वेगो द्विविध इत्यर्थः । शरादौ हि नोदन-जनितेन कर्म्मणा वेगो जन्यते तेन च पूर्व्वकर्म्म-नाशस्तत उत्तरकर्म्म, एवमग्रेऽपि । विना च वेगं कर्म्मणः कर्म्मप्रतिबन्धकत्वात् पूर्व्वकर्म्मनाश उत्तरकर्म्मोत्पत्तिश्च न स्यात् । यत्र वेगवता क-पालेन जनिते घटे वेगो जन्यते स वेगजो वेगः ।

स्थितिस्थापकसंस्कारः
क्षितौ केचिच्चतुर्ष्वपि ।

अतीन्द्रियोऽसौ विज्ञेयः

क्व चित् स्पन्देऽपि कारणम् ।१५९

स्थितिस्थापक इति । आकृष्टशाखादीनां परित्यागे पुनर्गमनस्य स्थितिस्थापकसाध्यत्वात् । क्व चिदिति । चतुर्षु क्षित्यादिषु स्थितिस्थापकं के चिन्मन्यन्ते तदप्रमाणमिति भावः । असौ स्थितिस्थापकः । क्व चिदाकृष्टशाखादौ ।

भावनाख्य इति । तस्य संस्कारस्य । उपेक्षात्मकज्ञानात् संस्कारानुत्पत्तेरुपेक्षानात्मक इत्युक्तम् । तत्संशयात् संस्कारोनुत्पत्तेर्निश्चय इत्युक्तम् । तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः । ननु स्मरणं प्रत्यपेक्षान्यनिश्चयत्वेन हेतुत्वं तेनोपेक्षादिस्थले न स्मरणमित्थं च संस्कारं प्रति ज्ञानत्वेनैव हेतुतास्त्विति चेन्न । विनिगमनाविरहेण संस्कारं प्रत्यप्युपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात् । किं चोपेक्षास्थले संस्कारकल्पनाया गुरुत्वात् संस्कारं प्रति चोपेक्षान्यत्वेन हेतुतायाः सिद्धत्वात् ।

तत्र प्रमाणं दर्शयति । स्मरण इति ।

स्मरणे प्रत्यभिज्ञाया-
मप्यसौ हेतुरुच्यते ।

असौ संस्कारो यतः स्मरणं प्रत्यभिज्ञानं च जनयत्यतः संस्कारः कल्पग्रते । विना व्यापारं पूर्व्वानुभवस्य स्मरणादिजननासामर्थ्यात् स्वस्वव्यापारान्यतराभावे कारणत्वासम्भवात् । न च प्रत्यभिज्ञां प्रति तत्तत्संस्कारस्य हेतुत्वे प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम् । अप्रयोजकत्वात् । परे त्वनुद्बुद्धसंस्कारात् प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्स्मरणस्यैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्पग्रत इत्याहुः ।

अदृष्टं निरूपयति । धर्म्माधर्म्माविति ।

धर्म्माधर्म्मावदृष्टं स्या-
द्धर्म्मः स्वर्गादिसाधनम् । १६१ ।
गङ्गास्नानादियागादि-
व्यापारः स तु कीर्त्तितः ।
कर्मनाशाजलस्पर्शा-

दिना नाश्यस्त्वसौ मतः ॥ १६२ ॥

स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनां च साधनं धर्म्म इत्यर्थः । तत्र प्रमाणं दर्शयितुमाह । यागादीति । यागादिव्यापारतया हि धर्म्मः कल्प्यते । अन्यथा यागादीनां चिरविनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनकत्वं न स्यात् । तदुक्तमाचार्य्यैः । "चिरध्वस्तं फलायालं न कर्म्मातिशयं विने" ति । ननु यागध्वंस एव व्यापारः स्यात्, न च प्रतियोगिध्वंसयोरेकत्राजनकत्वम्, सर्व्वत्र तथात्वे मानाभावात्, न च त्वन्मते फलानन्त्यं मन्मते चरमफलस्यापूर्व्वनाशकत्वान्न तथात्वमिति वाच्यम्, कालविशेषस्य सहकारित्वादित्यत आह । गङ्गास्नानेति । गङ्गास्नानस्य हि स्वर्गजनकत्वेऽनन्तानां जलसंयोगध्वंसानां व्यापारत्वमपेक्ष्यैकमपूर्व्वं कल्प्यते लाघवादिति भावः । ननु ध्वंसोऽपि न व्यापारोऽस्तु, न च निर्व्यापारस्य चिरध्वस्तस्य कथं कारणत्वमिति वाच्यम्, अनन्यथासिद्धनियतपूर्व्ववर्त्तित्वस्य तत्रापि स-

त्वात्, अव्यवहितपूर्व्ववर्त्तित्वं हि चक्षुःसंयोगादेः कारणत्वे न तु सर्व्वत्र कार्य्यकालवृत्तित्वमिव समवायिकारणस्य कारणत्व इत्यत आह । कर्म्मनाशेति । यदि ह्यपूर्व्वं न स्यात्तदा कर्म्मनाशाजलस्पर्शादिना नाश्यत्वं धर्म्मस्य न स्यात् । न हि तेन यागादिनाशः प्रतिबन्धो वा कर्त्तुं शक्यते तस्य पूर्व्वमेव वृत्तत्वादिति । एतेन देवताप्रीतिरेव फलमित्यपास्तम् । गङ्गास्नानादौ सर्व्वत्र देवताप्रीतेरसम्भवात् देवतायाश्चेतनत्वेऽपि तत्प्रीतेरनुद्देश्यत्वात्, प्रीतेः सुखस्वरूपत्वेन विष्णुप्रीत्यादौ तदसम्भवात् । जन्यसुखादेस्तत्राभावात् तेन विष्णुप्रीतिजन्यत्वेन पराभिमतस्वर्गादिरेव विष्णुप्रीतिशब्देन लक्ष्यते ।

अधर्मो नरकादीनां
हेतुर्निन्दितकर्मजः ॥
प्रायश्चित्तादिनाश्योऽसौ
जीववृत्ती त्विमौ गुणौ ॥१६३ ॥

अधर्म्मो नरकादीनामिति । नरकदुःखादिसकलदुःखानां नारकिशरीरादीनां च साधनम-

धर्म्म इत्यर्थः । प्रमाणमाह । प्रायश्चित्तेति । यदि ह्यधर्म्मो न स्यात्तदा प्रायश्चित्तादिनाश्यत्वं न स्यात् । न हि तेन ब्रह्महननादीनां नाशः प्रतिबन्धो वा विधातुं शक्यते तस्य पूर्व्वमेव विनष्टत्वादिति भावः । जीवेति । ईश्वरस्य धर्म्माधर्म्माभावादिति भावः ।

इमौ तु वासनाजन्यौ
ज्ञानादपि विनश्यतः ।

इमौ धर्म्माधर्म्मौ । वासनेति । अतो ज्ञानिना कृते सुकृतदुष्कृतकर्म्मणी न फलायालमिति भावः । ज्ञानादपीत्यपिना भोगपरिग्रहः । ननु तत्त्वज्ञानस्य कथं धर्म्माधर्म्मनाशकत्वं "नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपीति" वचनविरोधात्, इत्थं च तत्त्वज्ञानिनां झटिति कायव्यूहेन सकलकर्म्मणां भोगेन क्षय इति चेन्न । तत्र भोगस्य वेदबोदितनाशकोपलक्षत्वात् । कथमन्यथा प्रायश्चित्तादिना कर्म्मणां नाशः, तदुक्तम् "ज्ञानाग्निः सर्व्वकर्म्माणी"त्यादिना, श्रूयते च "क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे पराव-

रे" इति । ननु तत्वज्ञानिनस्तर्हि शरीरावस्थानं सुखदुःखादि च न स्याज् ज्ञानेन सर्व्वेषां कर्म्मणां नाशादिति चेन्न । प्रारब्धेतरकर्म्मणामेव नाशात् । तत्तच्छरीरभोगजनकं हि यत्कर्म्म तत् प्रारब्धं तदभिप्रायमेव नाभुक्तमिति वचनमिति ।

शब्दं निरूपयति । शब्दो ध्वनिश्चेति ।

शब्दो ध्वनिश्च वर्णश्च
मृदङ्गादिभवो ध्वनिः ॥ १६४ ॥
कण्ठसंयोगादिजन्या
वर्णास्ते कादयो मताः ।
सर्व्वः शब्दो नभोवृत्तिः

नभोवृत्तिराकाशसमवेतः ।

दूरस्थशब्दस्याग्रहणादाह । श्रोत्र इति ।

श्रोत्रोत्पन्नस्तु गृह्यते ॥ १६५ ॥

ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह । वीचीति ।

वीचीतरङ्गन्यायेन
तदुत्पत्तिस्तु कीर्त्तिता ।

आद्यशब्देन बहिर्दशदिगवच्छिन्नोऽन्यः श-

ब्दस्तेनैव शब्देन जन्यते तेन चापरस्तद्व्यापक, एवंक्रमेण श्रोत्रोत्पन्नो गृह्यत इति ।

कदम्बगोलकन्याया-
दुत्पत्तिः कस्य चिन्मते ॥ १६६ ॥

कदम्बेति । आद्यशब्दाद्दशसु दिक्षु दश शब्दा उत्पद्यन्ते ततश्चान्ये दश शब्दा उत्पद्यन्त इति भावः । अस्मिन् कल्पे गौरवादुक्तं कस्य चिन्मत इति ।

ननु शब्दस्य नित्यत्वादुत्पत्तिः कथमत आह । उत्पन्न इति ।

उत्पन्नः को विनष्टः क
इति बुद्धेरनित्यता ।

शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः ।

ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वमित्थं चोत्पादविनाशबुद्धिर्भ्रमरूपैवेत्यत आह । सोऽयं क इति ।

सोऽयं क इति बुद्धिस्तु
साजात्यमवलम्बते ॥ १६७ ॥

तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु तद्व्यक्त्यभेदो विषय उक्तप्रतीतिविरोधात् । इत्थं च द्वयोरपि बुद्ध्योर्न भ्रमत्वमिति।

ननु सजायतीत्थं सोऽयमिति प्रत्यभिज्ञायां भासत इति कुत्र दृष्टमित्यत आह । तदेवेति ।

तदेवौषधमित्यादौ
सजातीयेऽपि दर्शनात् ।

यदौषधं मया कृतं तदेवान्येनापि कृतमित्यादिदर्शनादिति भावः ।

॥ इति सिद्धान्तमुक्तावल्यां गुणनिरूपणम् ॥

इति श्रीमहामहोपाध्यायविद्यानिवासभट्टाचार्य्यपुत्रश्रीयुतविश्वनाथपञ्चाननभट्टाचार्य्यविरचिता न्यायसिद्धान्तमुक्तावली संपूर्णा ॥



